THE

PRINCESS OF WALES

SARASWATĪ BHAVANA TEXTS

No. 53

—o—

EDITED BY

GOPĪ NĀTHA KAVIRĀJA, M. A.

THE

# NRISIṂHA PRASĀDA

(VYAVAHĀRA SĀRA)



*Printed by Jai Krishna Das Gupta*

*Vidya Vilas Press, Benares City.*



1934

श्रीदलपतिराजविरचितः

# नृसिंहप्रसादः

## व्यवहारसारः ।

व्याकरणाचार्य–मीमांसातीर्थ–धर्मशास्त्र–शास्त्रि–टिल्लुइत्युपाख्य
पण्डितविनायकशास्त्रिणा सभूमिकोपस्कारं सम्पादितः ।

THE

# NṚISIMḤA PRASĀDA

## VYAVAHĀRA SĀRA

of

S'RĪ DALAPATIRĀJA




*Edited with Introduction etc.,*

By

VYĀKARAṆĀCHĀRYA, MIMANSA TIRTHA, DHARMASHASTRA SASTRI

SRI VINĀYAKA S'ĀSTRI TILLU

Post-Āchārya Research Scholar,
Govt. Sanskrit College,
BENARES.



1934.



# भूमिका

आनन्दघनविद्योतिनित्यानन्दपदाम्बुजम् ।
वन्दे चिन्मकरन्दार्थं मिलिन्द इव सन्ततम् ॥

अथेदं प्रस्तूयते नृसिंहप्रसादाभिधानस्य बृहतो धर्मशास्त्रीय प्रबन्धग्रन्थस्य व्यवहारसाराभिधं प्रकरणं संमुद्रय प्रकाशयितुम् ।

**धर्मेण सुखमेधते।**

सुखार्थी हि सकलोऽयं लोकः । सुखं च न पापप्रशममन्तरा । स च धर्मानुष्ठानैक साध्यः । 'धर्मेण पापमनुदति' इत्याम्नानात् । धर्मश्च प्रतिवर्णं प्रत्याश्रमं प्रतिव्यक्ति नियत-कर्तव्य रूपः । तच्च सम्यक् परिपालितं सुविभर्ति व्यष्टिबहुलां समष्टिम् । अपरिपालितं हि लोकक्षोभं करोति । तदाहुरभियुक्ताः—'धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः ।' तस्माद्धर्माधीनं सुखमित्यविवादम् । तदाहुः—

सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।
सुखं तु न विना धर्मात्तस्माद्धर्मं समाचरेत् ॥ इति ।

**धर्मे प्रमाणं न लौकिकम् ।**

स चायं कथं ज्ञेयः ? न तावत्प्रत्यक्षादिभिः । तेषां विषयेन्द्रियादिदोषजमिथ्याऽवबोधबाध्यत्वेन अलौकिकेऽथ अबाधितप्रत्ययानुत्पादकत्वात् । विद्यमानोपलम्भनत्वाच्च । किञ्च सम्वादान्तरसापेक्षस्वभावो लौकिकः प्रत्ययः पारलौकिकफलसाधनाधिगमे तद्विरहे तत्र अप्रवृत्तिकरः स्यात् । अतोऽसंनिकृष्टसाध्यसाधनभावासन्दिग्धप्रतिपत्तिकरः कश्चन शब्दराशिरेव शरणमभ्युपेयः । स च भगवती श्रुतिरेव । तथा चावितथमुक्तम्—'चोदनालक्षणोऽर्थो धर्मः' 'वेदोऽखिलो धर्ममूलम्' इत्याद्यनुशासनैः । सा हि अतिमानुषी Superhuman-विषय

प्रवृत्तिकरी नियमयति सकललोककर्तव्यकलापम् । स्वेच्छाचारी हि लौकिको जनस्तमात्मेच्छया विनियच्छन्मात्स्यन्यायमनुभवेत् । सा हि अपौरुषेयी परमपुरुषप्रभावाविर्भाविता वा स्यान्नाम । सर्वथा जडवादकलुषितपुरुषदोषलेशसंस्पर्शशून्या जननीवाहैतुकं जगन्निःश्रेयसोपायमुपदिशतीति सकलैरार्यचरितैः शिरोधार्यैव ।

किन्तु वेदः ।

सा च 'शिक्षा कल्पो व्याकरण' मित्यादिभिः षड्भिरङ्गैरभ्युपेता सम्यगवगमयति धर्मरहस्यमिति निगमयति स्वाध्यायविधिः 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति । यथा चाङ्गान्येतदर्थज्ञानमुपकुर्वन्ति तथा प्रथितमेव विदुषामनवसरभयात्तु न प्रपञ्च्यते ।

वेदाङ्गानि ।

एवं श्रुतिमतमार्गानुगाः मन्वत्रिविष्णुहारीतयाज्ञवल्क्यादिपरमर्षिप्रणीताः स्मृतयोऽपि धर्ममर्मज्ञापनेऽतिशयमुपकारिकाः । यतो हि श्रुतीनामनन्तत्वाद् दुरूहत्वात् कालकलनयाऽनुपलब्धसकलशाखत्वात् तपःस्वाध्यायाद्यधिकारितावच्छेदकन्यूनत्वादल्पायुषा मानुषेण सामग्र्येणाध्येतुमशक्यत्वादसुकरः सर्वेषां ततो धर्ममर्मपरिचयः । अतस्तदुक्तार्थानुशीलनानुष्ठानादिपरमतपःप्राप्तप्रभावाणां मन्वादिमहर्षीणां वचनाधीना हि प्रात्यहिकाद्याचरितव्यानाचरितव्य Positive law-धीः ।

स्मृतिः ।

तत्र श्रुतिविरोधे, मिथः स्मृतीनां द्वैधे वा कथङ्कारं प्रमेयप्रतिपत्तिरित्यन्यत्र विस्तरः ।

एवमविगीतः सदाचारः-Customs-श्रुतिस्मृतिग्रन्थरहस्यमविदुषोऽपि लोकान् यष्टिरिवान्धं सत्पथमुन्नयति । तथा च—

'येनास्मत्पितरो याता येन याताः पितामहाः ।<br>तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥' इति ।

आचारः ।

स चायं शिष्टानाम् , अविगीतः-Not to be immoral, अदृष्टलोभादिमूलकः, सनातनः-Ancient, लोकाविद्विष्टः-Not apposite

to public policy-आदरणीयो नान्य इत्यादिविषये यथाऽवसरं विचारयिष्यते ।

**पुराणानि ।** एवं पुराणानि अपि दृष्टान्तप्रदर्शनव्याजेनार्थवादविधया, क्वचिच्च साक्षादेव यथा कलिवर्ज्यादौ धर्मावबोधकत्वेन परमुपकुर्वन्ति कान्तासम्मिततयोपदेशकानि ।

कालः कलहकरालः क्रमेण । दुरूहाः श्रुतयः । विभिन्नाः स्मृतयः । निबन्धग्रन्थाः । संशयोत्थितिः पुराणेभ्यः । देशाचाराः सहस्रशः । आपाततः प्रतीयते वचनेषु विरोधः । तत्रैकवाक्यत्वेन कार्याकार्यावगत्यै मीमांसाशास्त्रसिद्धसमन्वयादिव्यवस्थास्ववस्थितैः तत्तद्देशकालोचिताचारचर्चाविचक्षणैः असहाय-मेधातिथि-विज्ञानेश्वरप्रभृतिभिराचार्यैर्मनुनारदादिस्मृतयो व्याख्याताः । लक्ष्मीधर-हेमाद्रि-देवण्णभट्टादिभिश्च निबन्धग्रन्थाः संग्रथिताः ।

तान्येतानि स्मृति-व्याख्या-निबन्धादीनि धर्मशास्त्रत्वेन व्यपदिश्यन्ते । तथा च—

**धर्मशास्त्रम् ।** 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥'
'श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।'

इत्यादिवचननिचयो निश्चिनुतेऽमुमर्थम् ।

**ध. शा. विकासकालः ।** एतस्य धर्मशास्त्रस्य ग्रन्थरूपेण विकाससमयः समयनिर्णयनिपुणैराधुनिककोविदैः सामान्यतस्त्रिविधो निम्नलिखितो निर्द्धारितः ।

तत्राद्यः—ख्रिस्ताब्दारम्भात्प्राक् षष्ठशतकादारभ्य । अत्र गौतमबौधायनापस्तम्बादिधर्मसूत्राणि प्राचीनतमा मनुस्मृतिश्च निरमीयन्त ।

द्वितीयः—ख्रिस्ताब्दप्रथमशतकात् अष्टमशताब्दीं यावत् । अत्र हि विविधा याज्ञवल्क्य-नारद-कात्यायनादिस्मृतयः प्रकाशमीयुः ।

तृतीयश्च—सप्तमशताब्दीतः अष्टादशतमशतकावसानपर्यन्तः ।

अत्र हि पूर्वमसहायभर्तृयज्ञ—मेधातिथ्यादिभाष्यग्रन्थाः, ततः विज्ञानेश्वर—अपरार्कप्रभृतिविरचिताः व्याख्याः, कल्पतरु-स्मृतिचन्द्रिका—चतुर्वर्गचिन्तामणिप्रभृतिमहानिबन्धाश्च प्राकाश्यमापुरिति सङ्क्षेपः।

प्रसक्तम्। एवञ्च श्रुतिस्मृतिमनुसरन्तीभिः मन्वादिस्मृतिभिः 'व्यवहारान्नृपः पश्ये' दित्यादिना वचनचयेन अर्थिप्रत्यर्थिविवादात्मकव्यवहारदर्शनं प्रजापरिपालनाङ्गत्वेन लोकगुप्तयेऽधिकृतस्य जनपदैश्वर्यवतो राज्ञः Power of sanction कर्तव्यत्वेन सेतिकर्तव्याकं विधीयते। स च व्यवहारः चतुश्चरणः अष्टादशपदः राज्ञा प्राड्विवाकेन परिषदादिना—वा पुराकाले विचार्य आसीत्। तदवलोकनयाथार्थ्येन च राज्ञः प्रजापरिपालनमत्यधिकं सिद्धं भवति स्मेति सुस्पष्टं वेद्यमस्माकं प्राचीनधर्मशास्त्रवाङ्मयसागरावलोडनेन।

सम्प्रति। सोऽयमष्टादशपदोपबृंहितोऽभिहितोऽपि व्यवहारः सम्प्रति शासनाधिकृतैः-रिक्थ—Inheritence-संविभाग-Succession-दत्तक-Adoption-प्रभृतिषु केषुचिदेव दयनिबन्धनेषु—Suits of Civil-nature-विचार्यो भवति नेतरेषु ऋणादानादिषु साहसादिषु दण्डनिबन्धनेषु-Criminal-च।

सच सत्स्वपि श्रुतिस्मृतिग्रन्थेषु :परःशतं सम्प्रति तद्व्याख्यातृ-निबन्धकृदुक्तानुसरणेन तत्र तत्र वर्तमानरूढयादिबलेनैव

सम्प्रति निबन्धादिभिर्निर्णयः। च निर्णय इति निर्णीतं साम्प्रतिकभारतीयसु व्यन्यायपरिषदा-Privy council।

रूढिः। निबन्धकृदुक्तिषु विरोधादौ भासमानेऽपि तत्तद्देशनिरूढजातिकुलाद्याचारत एव निर्णयः। शास्त्राद्रूढेर्बलीयस्त्वात्-"for under the Hindu system of law, clear proof outweigh the written text of law" ( collector of

Madura v. Moottoo Ramalinga case of 1868 ) इति निर्धारितम्।

एवमनेके प्रबन्धा मिताक्षरा-दायभाग-मयूखादयः। ते च कचिद्विषयेषु मिथो विवदन्ते। यथा-मिताक्षरा हि सप्रतिबन्धाप्रतिबन्धभेदाद्दायद्वैविध्यं मन्यते। जीमूतवाहनस्तु सर्वमेव दायं सप्रतिबन्धम्। एवं विज्ञानेश्वरः एकशरीरावयवसम्बन्धनिबन्धनं-Propinquity of Blood-सापिण्ड्यं सर्वत्राह। दायभागकृत्तु पिण्डदानक्रियाधिकार-Religious efficacy-निबन्धनम्। मयूखकृत् भगिनी-दुहित्रादीनां सम्पूर्णस्वामिकं रिक्थमाह। नेतरे। एवं पितुः प्राङ्माताऽनपत्यमृतपत्नीकधनाधिकारिणीति मिताक्षरा आह। मयूखादयो मातुः पूर्वं पितेत्यादि।

**निबन्धेषु विमतम्।**

एवं सत्यपि स्मृतिवचनसाम्ये व्याख्यातृ-Interpretation-कौशलेन प्रादुर्भूते विमतजालेऽपि नाप्रामाण्यं कस्यापि। नाप्यनवस्था। किन्तु अविरोधाय साम्प्रतिकैर्दूरदर्शिभिर्न्यायदर्शिभिः दायभाग-मिताक्षरयोः सम्प्रदायभेदो बङ्ग-तदितरभारतयोर्व्यवस्थापितः।

**सम्प्रदायभेदः। -Differant law Schools,**

एवं मिताक्षरासम्प्रदायान्तर्गताश्चापरे चत्वार उपसम्प्रदायाः स्वीकृताः। ते च—

**उपसम्प्रदायाः।**

१ काशी सं.
२ महाराष्ट्र ( गुर्जर विदर्भ ) सं०
३ द्रविड सं.
४ मिथिला सं. इति।

तत्र काशीसम्प्रदाये वीरमित्रोदय—निर्णयसिन्धु—दत्तकमीमांसादयः। महाराष्ट्र सं. नि. सि.-विवादताण्डव-मयूख-वीरमित्रोदयादयः। द्रविडेषु स्मृतिचन्द्रिका-पराशरमाधवादयः। मिथिलायां वि० चिन्तामणि-वि० रत्नाकरप्रभृतयः। सर्वेष्वपि मिताक्षराऽविशिष्टा।

वङ्गेषु च दायभाग–दा. तत्त्व–दा. क्रमसङ्ग्रहादयः । तत्राप्यनुक्ताविरुद्धयोर्मिताक्षरा समादरणीयैवेति ।

एवं प्राचीनशिष्टपरिगृहीतपथमनुयात्यपि न्यायशकटे सम्प्रति बहुविद्वज्जनसम्मत्या अभिनवा विचारधाराः—amendments—प्रवर्तन्ते—Privy council–मुख्यन्यायपरिषदि इति तत्र विषये नेह प्रपञ्चो योग्य इति मत्वा प्रकृतमनुसर्यते ।

प्रकृतो ग्रन्थः ।

इह प्रकाश्यमानः प्रकृतो व्यवहारविषयप्रकाशकनिबन्धान्यतमः व्यवहारसारः षोडशतमविक्रमशताब्दीमध्ये दक्षिणदिङ्महीपालनिजामशाहामात्येन महाराजाधिराजदलपतिराजेन बहुविधधर्मशास्त्रप्रबन्धपर्यालोचनपुरःस्सरं प्रणीतस्य नृसिंहप्रसादाख्यस्य महाप्रबन्धस्य पञ्चमो भागः पाठकानां पुरस्तादुपस्थापितः ।

बृहतो ग्रन्थस्यास्य द्वादश साराः (प्रकरणानि) सन्ति । तथा हि–

(सं. सा.) संस्कारसारः प्रथमो द्वितीयस्त्वाह्निकाभिधः ।
श्राद्धसारस्तृतीयस्तु चतुर्थः कालनिर्णयः ॥
पञ्चमो व्यवहाराख्यः प्रायश्चित्ताभिधो...... ।
..............नाशकः [ सप्तमस्त्वघनाशकः ] ॥
अष्टमो व्रतसाराख्यः पुराणोक्ताभिधायकः ।
नवमो दानसाराख्यः सर्ववर्णाधिकारकः ॥
दशमः शान्तिसंज्ञो वै तीर्थ एकादशः स्मृतः ।
देवप्रतिष्ठासारश्च द्वादशः परिकीर्तितः ॥ १७–२० ॥

कीटदष्टानि स्थानानि रिक्तानि । प्रायश्चित्तसारः षष्ठः कर्मविपाकसारश्च सप्तम इति तत्तात्पर्यम् ।

तत्र संस्कारसारे धर्मपदार्थविमर्शनम् , श्रुतिस्मृत्यादिप्रमाणानि, पुराणप्रामाण्यम् , कलिवर्ज्यमित्यादि प्रास्ताविकमुक्त्वा जातकर्माद्याः संस्काराः आश्वलायनापस्तम्बमाध्यन्दिनपद्धत्यनुसारेण प्रतिपादिताः ।

तथा च ( सं० सा० )—

आश्वलायनापस्तम्बयाज्ञवल्क्यमतानुगाः ।
श्रीनृसिंहप्रसादेन क्रियां कुर्वन्तु नित्यशः ॥
तत्तद्गृह्यानुसारेण कारिकादर्शनेन च ।
ज्योतिःशास्त्रादिदृष्ट्या च यथामति विरच्यते ॥ इति ।

आचारप्रसङ्गेन मातुलसुतापरिणयनं वेदाभिहिततया न दोषावहमित्यभिदधे । एवं 'यत्र स्मृतिपौराणयोर्विरोधस्तत्र विकल्पः समबलत्वात्' इति मतमाचख्यौ । एवं चतुर्विधाश्रमधर्माः स्नातकधर्माश्च संस्कारसारे निरूपिताः ।

एवं तेषु तेषु प्रकरणेषु [ सारेषु ] तत्तत्समाख्यानुरोधेन तत्तद्विषयाः प्रतिपादिताः ।

अस्य ग्रन्थस्य प्रणेता श्रीमन्महाराजाधिराजाभिधानाङ्कितः दलपति

ग्रन्थकर्ता । राजो दलाधीश्वरो दलाधीशो नाम वा माध्यन्दिनयजुःशाखाध्यायी भारद्वाजगोत्रः श्रीमद्वल्लभ पण्डितात्मजः इति—

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः
भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥ इति

प्रतिप्रकरणावसानपठितात्पद्यादवसीयते ।

एतद्ग्रन्थादौ स्वेष्टदेवताश्रीनृसिंहप्रणतिपुरस्सरमथमुत्तरपद्येन देवगिरिनृपतिं रामं, सामविन्नामकं दिल्लीश्वरं, तदधिकतरप्रभावं च निजामसाहं स्वप्रभुं वर्णयति । यथा-( सं० सा० )

श्रीमद्देवगिरौ पुरन्दरपुरस्पर्धाधिवद्धादरे
रामे राजनि शा(?सा)मवित्किल बभौ राजा स दिल्लीश्वरः ।
दिल्लीशादुपरि क्षितौ समभवन्नैजामसाहो महान्
यद्दोर्दण्डनिजप्रतापमहिमा राज्यं वशे चानयत ॥ इति ।

एवं स्वस्य निजामसाहामात्यत्वं करणाधीश्वरत्वं (Chief minister or keeper of the imperial records) चोपवर्ण्य स्वस्य सूर्यपण्डिता(१)द्दासादितविद्यत्वं च वर्णयति। यथा-(श्रा.सा.)।

"श्रीमत्प्रौढप्रताप महाराजाधिराज-सर्वपुरीसुन्दरीदेवगिरिपुरवराधीश्वर-समस्तयवनाधीश्वर-श्रीमन्निजामसाह-समस्तकरणाधीश्वर--सकलविद्याविशारद-याज्ञवल्कीयलुप्तशाखाप्रवर्तक-द्विजकुलालङ्कारहीर-श्रीवैष्णवमार्गप्रवर्तक-श्रीवल्लभात्मज-श्रीवल्लभपण्डितप्रसादासादित सूर्यपण्डिताभिधगुरु-मन्वादिप्रणीतनीतिशास्त्राभिज्ञ-महाप्रभुस्वकार्यवीक्षणप्रतिनिधीकृत-श्रीमन्महाराजाधि'''" इ।

क्वचिच्चायं निजामसाहं बहुभिः श्लोकैरुपवर्ण्य नेवक्षितिपालपुत्रत्वेन नेवजनित्वेन [ Not नेवजन ] च वर्णयति।

यथा (सं.सा.)-

सौन्दर्यैकनिधिं विवेकजलधिं दातृत्वभूमिं पराम्।

श्रीनेवक्षितिपालसूनुमिह तं नैजामसाहं नुमः॥ इति।

एवं (सं. सा.) 'श्रीमन्नेवजनश ? [ जनेः स ] मस्तकरणाधीशः सतामग्रणीः' ॥ इ०।

तथा (२)श्राद्धसारपुष्पिकायामौत्कल (Orissa) तैरभुक्त (Mit-

(१) अयं च सूर्यपण्डितः पुण्यश्लोकस्य परमभागवतस्य प्रतिष्ठान (पैठण) वास्तव्यस्य श्रीमदेकनाथाभिधमहाराष्ट्रसाधुवर्यस्य जनकः सम्भवतीति P. W. Kane महाशयः स्वकीये—History of Hindu Dharmrasātra पुस्तके तर्कयति। श्रीमदेकनाथेन हि १४९५ तमे शाके [1573 A.D.] काश्यां श्रीमद्भागवतैकादशस्कन्धे 'एकाकार' नाम्नी महाराष्ट्रभाषाटीका विरचिता याऽद्यत्वे श्रुतिरिव शिरसि धार्यते महाराष्ट्रपण्डितैः।

(२) "'''सूर्यवंशतिलक-औत्कल तैरभुक्त-गौड-गुर्जर-मालव-मागध-पाञ्चालकार्णाटान्ध्राद्यनेकप्रौढराजस्पृहणीयकीर्ति—सकलभूमिमण्डलाखण्डल''''''" (श्रा. सा.)

hila )यनेकराजस्पृहणीयकीर्तित्वेन स्वभुजार्जितसाम्राज्यत्वेन च प्रशंसति ।

क्वचिच्चायमात्मानं वैष्णवधर्मप्रवर्तकत्वेन, क्वचित् ( सं. सा. गर्भाधान सं. ) वैदिकमार्गप्रवर्तकत्वेन, कुत्रचित्तु ( श्रा. सा. ) याज्ञवल्कीयलुप्तशाखाप्रवर्तकापरसूर्यत्वेन प्रशंसति ।

स्वग्रन्थस्य च ( सं० सा० ) मनुविष्णुदक्षाङ्गिरःप्रभृतिप्रणीत-स्मृतिशास्त्र–महापुराणोपपुराणाद्यालोचनपूर्वकत्वं प्रतिज्ञाय निबन्ध-कृतोऽपि कालादर्शानन्तभट्ट–विज्ञानेश्वर–भट्टहेमाद्रि–दीपिकाविवरण–असहाय–प्रयोगपारिजात–मदनपारिजात–कृत्यकल्पतरु–माधव–स्मृ-तिचन्द्रिका–स्मृतिरत्नावली–स्मृतिदर्पण–स्मृतिचिन्तामणि–स्मृतिभा-स्कर–मेधातिथि–विज्ञानतिलक–अपरार्क–विज्ञानमार्कण्ड–भोजराजी-य—विश्वरूपनिबन्ध–नारायणीय–गणेश–वाक्यमीमांसा–स्मृतिमीमां-सा—निबन्धसर्वस्व–स्मृतिमहार्णव–शातातपीयकर्मविपाकसमुच्चय–माधवीय–मैलुगि ( ? ) कर्मविपाक–प्रवराध्याय–प्रवरमञ्जरी–जाति-विवेकप्रमुखाननेकनिबन्धान्, आश्वलायनापस्तम्बसाङ्ख्यायनकात्या-यनककभाष्य—स्मृति–प्रयोगरत्नावली—विधानमालाप्रमुखान्वैदिकग्र-न्थान्‌''''''समगभ्यसे''त्यादिना समुल्लिखति ।

एवं तन्त्रवार्तिकव्याख्यातारं भट्टसोमेश्वरं वेदार्थप्रकाशकरमन-न्ताचार्यं लौगाक्षिं त्रिकाण्डमण्डनं च ( सं.सा. ) स्मृतिरत्नकोश-कारं–श्रीधरीयं–चतुर्विंशत्यध्यायरूपकर्ममीमांसां च उल्लिखति ।

अयं च मातुलसुतापरिणयनस्य वेदाभिहितयाऽदुष्टत्ववादित्वा ( सं. सा. )न्महाराष्ट्रः ब्राह्मण इति पर्यवस्यति इत्यास्तां तावत् ।

इदानीं कस्मिन्समयेऽयं ग्रन्थकार आसेति विषये काचिद्विवेचना कर्तव्या । अयं च निजामसाहः अहमदनगरसाम्राज्यसंस्थापकः मलिक

ग्रन्थकृत्समयः । अहमदनिजामसाहः [ यः १४९० तः १५०८ ई. स पर्यन्तं राज्यं चकार ] तत्पुत्रो बुरहाण निजामसाहो [ १५०८ तः १५३३ ] वा स्यात् । प्रायस्तु पूर्व एवेति

P. W. Kane महोदयः । ई. १४८२ तः १६३७ पर्यन्तं दक्षिणस्यां दिशि सुप्रथितो 'बहमनी'वंशः साम्राज्यं बुभुजे । तत्साम्राज्यं Berar, Bijapur, Ahmadnagar, Bedar and Golkonda इति पञ्चधा विभक्तम् । तत्र Ahmadnagar राज्याधिष्ठाता मलिक अहमदः १४८९ ईशवीये वर्षे स्वभुजभीमप्रभावेण पराभूतरिपुदर्पः बहमनीनृपतिपरवशताधुरमुत्सार्य स्वतन्त्रो भूत्वा देवगिरिराज्यमजैषीत् । तेनैव च स्वनाम्ना 'अहमदनगरं' संस्थाप्य राजधानीकृतम् । एवं स स्वविजयचिह्नरूपं 'निजामशाह' नामधेयमकल्पयत् । एतच्च तद्वंशनामत्वेन प्रचलितम् । [ अस्मिन्नेवान्ववाये सुप्रथितशौर्यप्रभावा 'चांदबिबी' नाम महाराज्ञी जज्ञे या महाविक्रमेण सम्राडकबरसेनापतिना समं युध्वा स्वस्वातन्त्र्यमरक्षयत् ] तत्पुत्रो 'बुह्राणशहा' च यवनोऽप्येनेकेषां 'हिन्दू' विदुषामाश्रयदाता कम्बरसेनादीननेकान् ब्राह्मणानमात्यानकरोत् (महाराष्ट्रीय ज्ञानकोश)। एतत्समकालिकश्च दिल्लीपतिः सुप्रथितयशा 'हुमायून' नामक आसीत् ( म. ज्ञा. को. ) ।

[ ग्रन्थकृता उल्लिखितः देवगिरीशः 'रामः', दिल्लीशः 'सामविल्' च कः, कस्य च 'नेब' इत्याख्या इत्यादिविषये नैतावता विचरितुं सुशकम् । ]

एवं च 'अहमद निजामशाह' ( १४९० ई. स. ) कालीनः तत्पुत्रकालिको वाऽयमित्याभाति ।

[ सुभाषितरत्न भाण्डागारीयविशिष्टराजप्रशंसाप्रकरणस्थं—

चन्द्रं चन्द्रार्धचूडं चतुरुदधिचयं चन्द्रिका चन्द्रकान्तं
चार्वङ्गीलोचनान्तं चमरसहचरीवालभारोच्चयं च ।
खर्वीकुर्वन्ति दर्वीकरतिलकमपि ध्वस्तगुर्वीतिभाति
स्वर्वीथि प्रस्थितास्ते दलपतिगृहिणि त्वद्यशःस्तोमसोमाः ॥

इति दलपतिरायनृपतिमहिषीप्रशस्ति परं पद्यं केन निर्मितं कं दलपतिं वा बोधयतीति; Jubbulpore समीपस्थित 'गढमण्डला' धीशस्य सुप्रथित-राणी दुर्गावती-राज्याः पत्युर्वा अन्यस्य कस्यापि वात्रोल्लेख इति च नाद्यापि निर्णयः।

एवं तत्रैव निजामसाहवर्णनपराः श्लोकाः कं वा महापराक्रमशालिनं निजामसाहं संस्तुवन्तीत्यप्यनिर्णीतम्।

तत्र हि एकतमेन पद्येन—

अङ्गाः सञ्जातभङ्गा द्य न वनवसतिप्राप्तरङ्गाः कलिङ्गाः।
तैलङ्गाः स्वर्गगङ्गाभिषवणमतयः शौर्यदङ्गाश्च वङ्गाः॥
लाटाः स्विद्यल्ललाटाः पदगमनदृढाः श्वासलोलाश्च चोलाः।
जायन्ते श्रीनिजाम पृथुरण भवतः प्रौढनिःसाणनादात्॥ इति

सकलनृपविजयित्वमस्य सूच्यते। ]

एवं—माधवीय—मदनपारिजात( 1360-1390 A. D. )योरुल्लेखादयं तदुत्तर ( 1400 A. D. ) वर्तीति निश्चितम्।

किञ्च—शङ्करभट्टीय द्वैतनिर्णय-नीलकण्ठभट्टकृतमयूखयोरस्योल्लेखादयं ( 1575 A. D. ) तः प्राग्भाव्येव।

कतिपयप्रकरणान्ते 'क' पुस्तके १५६८—६९ (1511–12 A. D.) सम्वत्प्रदर्शनात् च ग्रन्थरचना तत्प्राक्कालिकीत्यप्यविवादम्।

एवञ्च उपरिनिर्दिष्टनिजामसाहसमयाद्यनुरोधादयं ग्रन्थः १४९० तः १५१२ पर्यन्तसमयमध्य एव विरचितः स्यादिति।

प्रकृते च व्यवहारसारे व्यवहारसारीयविषयानुक्रमः—व्यवहारमातृकाः—साधारणविशेषकृत्यानि—राज—राज—सभादि—ज्ञापककारकप्रमाणानि इत्यादीन्युपपाद्य ऋणादानाद्यष्टादशपदो व्यवहारो विवेचितः।

व्य० सारस्य विशेषः।

अयं च प्रायः दायप्रकरणादौ मिताक्षराकृन्मतमेवानुसरति ( पृ० २१२)। तथापि क्वचित् क्वचित् मिताक्षरा—मेधातिथि—स्मृतिचन्द्रिका—

कारादिमतान्युल्लिख्य ताटस्थ्यमवलम्ब्यते । यथा दायग्रहणक्रमे मातापित्रोः क्रमविषये ( पृ. २५२ ) । तत्र हि 'अत्र यद्बहुसम्मतं तदेव युक्तम्'मित्युक्तम् । एवं ( पृ. २२८ ) भगिनीनामंशकल्पना विवाहसंस्कारार्था दायभागार्था वेत्यत्र विमतानि प्रदर्श्य 'धर्ममर्मवादिनः सज्जनाः प्रष्टव्याः' इत्यभिहितवान् ।

एवं 'विभक्तधनेऽपि भ्रातर्युपरतेऽपत्यकारक एव पत्न्या धनसम्बन्ध' इति मतमसहाय–मेधातिथि–विज्ञानेश्वर–माधवादिनिबन्धानुरोधेन खण्डयति ( पृ. २५७ ) ।

एवं ( पृ. २२१ ) 'अनेकपितृकाणां तु' इत्यत्र 'सामान्यार्थसमुत्थाने' इत्यत्र च अपरार्कविज्ञानेश्वरादिग्रन्थसारल्ये सत्यपि यत्किञ्चिदपि व्याख्याय मतिभेद आपाद्यते । तत्र लेखकप्रमादोऽपि अनर्थकरः सम्भाव्यते ।

एवं ( ६ पृष्ठे ) विलक्षणं माधवसरस्वतीमतं खण्डयतः कोऽभिप्राय इत्यशुद्धिप्रायाद्ग्रन्थान्न प्रत्यभिज्ञायते ।

अस्य हि ग्रन्थकर्तुः निजामसाह करणाधीश्वरत्वेन तद्राज्ये हिन्दूनां धर्मनिर्णयः व्यवहारनिर्णयश्चैतद्ग्रन्थानुसारेण स्यान्नाम एतद्विषये न किमप्यैतिह्यमद्य यावदुपलब्धम् ।

उत्तरकालीनैर्व्यवहारनिबन्धृभिर्नास्य व्यवहारेषु कश्चनोल्लेखः क्रियते ।

तस्यैतस्य पुस्तकं बहुतरमन्विष्यापि अलभता काशीस्थराज-

**आदर्शपुस्तकम् ।** कीयप्रधानसंस्कृतपाठशालीयसरस्वतीभवनपुस्तकालयस्थं सम्पूर्णमेकं हस्तलिखितमासादितम् । तत्रैवापरं केवलं व्यवहारसारपुस्तकमप्यासादितम् । तत्र सम्पूर्णपुस्तकं 'क' इति संज्ञयाऽपरं च 'ख' सञ्ज्ञयाऽत्र व्यवह्रियते ।

तदेतत् 'क' पुस्तकं सम्पूर्णप्रायमपि जीर्णपत्रं क्वचित्कीटसन्दष्टाक्षरं संस्कारसारादिव्यवहारसारान्तैर्द्वादशभिरध्यायैरुपबृंहितमशुद्धिबहुलमपि दुर्लभतममस्ति। तस्यैवाह्निकसारीयपृष्ठे 'सम्वत १५६८ समये आश्विनवदि १३ शुक्रवासरे' इति लिखितम्। एवं तत्रैव मुखपृष्ठे ( Title page ) "सम्वत् १५६९ वैशाख वदि ७ शुक्रे" i. e. 7 th May 1512 A. D. इत्यङ्कितम्। एवं कर्मविपाकसारीय पुष्पिका( colophon )या अधस्तात् "सम्वत १५६६ समये काशिपुरी श्रीविश्वेश्वर चरण सन्निधाने" इति ; एवं तीर्थसारस्यान्ते "सम्वत् १५६८ वैशाखसुदि द्वितीया रवौ" इत्युल्लेखः।

तदालोचनेन विक्रमीय १६ शतमशताब्द्या मध्ये वाराणस्यां लिखितमेतदित्यवगम्यते। लेखकश्चास्य महाराष्ट्रभाषाभाष्येव कश्चिदिति तत्र तत्र शोधपत्रपूरणादिस्थले तद्भाषालिखितत्वादवगतम्।

किञ्च दानसाराद्यपृष्ठे "रामपण्डितानाम्" इति, तथा व्रतसारान्ते 'इदं नृसिंहप्रसादपुस्तकं धर्माधिकारि वासुदेवस्य, सन्देहो नास्ती' त्यालोचनात्सुप्रथितयशसः काशीस्थधर्माधिकारिवंशस्याधिपत्ये इदं पुस्तकमासीत्, इति असन्दिग्धम्।

प्रायः एते रामपण्डिताः सुगृहीतनामधेयस्य नन्दपण्डितापराभिधानधर्माधिकारि-विनायक-पण्डितस्य पितृचरणा भवेयुः। स च १७ दशशताब्द्याः पूर्वार्द्धेऽभवदिति सुप्रसिद्धमेव।

अपरं 'ख' पुस्तकमुपरितन पुस्तकस्यैव प्रतिलिपिरिति तदीयलेखकमहाशयानुसृत 'मक्षिकास्थाने मक्षिके'ति न्यायालोचनेन निश्चीयते। यत्र 'क' पुस्तकीयव्यवहारसारे कीटदष्टं तत्रास्मिन्न किमप्यक्षरं लिखितम्। अत इदं विशेषतः पाठान्तरादिकार्यसौकर्यं कर्तुं नापारयदिति सुज्ञेयम्। एवं बहुषु स्थलेषु खण्डितं चैतत्।

एतद्द्वयमवलम्ब्य प्रकृतप्रकाशने प्रवृत्तः तत्तत्प्रमाणपाठांशस्य

तत्तत्स्मृत्यादिग्रन्थानालोच्य तत्र तत्र यथामति संशोधनमकरवम् ।

यत्र नोपायान्तरेणापि सन्देहनिर्णयस्तत्र '?' इति प्रश्नचिह्नमयोजि । एवं निर्णयस्थले शुद्धं पूर्वं विलिख्य ततः ( ) चिह्नेऽशुद्धं न्यवेशि । कीटदष्टस्थलेष्वक्षराणि यथामति तर्कितानि, ग्रन्थान्तरोपलब्धानि वा [ ] इति चिह्नान्तर्गमितानि ।

एवमन्तेऽनुक्रमणीं मुनिनामादिसूचीं तत्र तत्र विशिष्टार्थप्रदर्शकं परिशिष्टं शुद्धयशुद्धिपत्रकं च निवेश्य यथा कथञ्चिदेतत्कार्यं समापयम् ।

तदेतद्व्यवहारसारपुस्तकं सरस्वतीभवनपुस्तकमालातः Princess of Walse Sarasvati Bhavan texts सम्पादयितुं पुरातनगीर्वाणवाङ्मयोद्धारधुरीणैः जिज्ञासूनामविरतं सदुपायप्रदर्शनव्रतदीक्षितैः प्राच्यप्रतीच्यानवद्यविद्यातत्त्वसम्यग्दर्शिभिः परमश्रद्धास्पदैः काशिकराजकीयप्रधानपाठशालाध्यक्षैः पण्डितप्रवरैः श्रीगोपीनाथ कविराज M. A., Principal, Govt. Sanskrit College, Benares महानुभावैराज्ञप्तः तत्प्रदर्शितपथमनुसरन्नेव अननुभूत सम्पादन कृत्यसम्भारोऽपि शनैःशनैरिदं कार्यं कर्तुमपारयमिति तेषां कृतज्ञतापूर्वकं स्मरणमेव मदुचितं मन्ये ।

एवं श्री ६ पूज्यचरण गणपति शास्त्रि मोकाटे गुरुवराणा(Prof. Govt. S. College, Benares. ) ममोघाशीर्वचसा समाश्वस्तहृदयः कथङ्कारं तेषामानृण्यं सम्पादयितुमीहे न वेद्मि ।

सुकविप्रवर—साहित्यदर्शनरसिक श्रीनारायणशास्त्रि खिस्ते (Asstt. Librarian Saraswati Bhawana ) महोदयैः सस्नेहहृदयैः संसूचितानर्थानुपयोज्य सफलः सन्नुपकारभारं तदीयं शिरसा वहामि ।

विषयसूचीनिर्माणादौ मन्मित्र पं० शङ्करकृष्ण जोशी साहित्याचार्य Post Acharya Scholar महाशयेन दत्तं साहाय्यमुपलभ्य सस्नेहं तमभिनन्दयामि ।

एवं कथं कथमपि विद्वज्जनाचरितसरणिमनुसरन्नपि प्रमाद स्खलितादौ सहृदयैर्विद्यावदातहृदयैः क्षन्तव्योऽयं जन इत्यभ्यर्थयते ।

काशीधाम
मि० चै. शु. श्रीरामनवमी सं० १९९१.

विद्वज्जनवशंवदः
टि० विनायक शर्मा.

# व्यवहारसारीयविषयानुक्रमः ।

विषयः पृष्ठम्

विषयः　　　　पृष्ठम्

इति ।



## शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| ते दोषः | तेऽदोषः | १७६ | ७ |
| द्राय | द्राह्य | १८३ | ८ |
| मत्थिनो | मत्स्यिनी | १९१ | ५ |
| त्वोर्वी | त्वोर्वी | १९४ | १७ |
| लणार्थं | लक्षणार्थं | २०७ | ८ |
| ग्रहणभि | गृहणाभि | २०६ | ९ |
| स्त्रिया | स्त्रियाः | ,, | ११ |
| न | न ( ? ) | २२० | १४ |
| मध्यम | मध्यक | २२१ | १० |
| विभक्तेभ्यः | विभ [ क्तजे ] क्तेभ्यः | २२४ | २१ |
| विभक्त | [ अ ] विभक्त | ,, | ,, |
| धन | धनं | २२५ | २ |
| एतवि | एतद्वि | २३२ | १२ |
| द्रव्यावि | द्रव्यवि | २३४ | १८ |
| षड्विधं | षड्विधं | २३७ | २ |
| पणर्यन्तं | पणपर्यन्तं | २३७ | १२ |
| तदात्ते | तदा ते | २४६ | ८ |
| परिणीता | परिणीता [ पुत्रा ] | ,, | ९ |
| वृद्धाण्य | वृद्धानण्य | २५० | १२ |
| विभक्ता सं० | विभक्तासं | २५५ | २० |
| अन्योदयः | अन्योदर्यः | २५६ | २ |
| प्राक | प्राक् | २६१ | ५ |
| स्वराऽग्र्रा | स्वराग्र्रा | २६२ | ७ |
| मङ्क्रा | मङ्क्मक्रा | २७३ | १२ |
| राजन्य | राजन्यवत् | २७७ | ६ |

श्री गणेशाय नमः ॥ श्रीमल्लक्ष्मीनृसिंहाय नमः ॥

श्रीदलपतिराज विराचिते

# श्रीनृसिंहप्रसादे

## व्यवहारसारः ।

लक्ष्मीनृसिंहं करुणाकरं श्रीसर्वोत्तमं साधुजनप्रसन्नम् ।
प्रणम्य विश्वेश्वरमीशवन्द्यं करोमि सद्भ्यो व्यवहारसारम् ॥१॥

श्री(१) नृसिंहप्रसादेन व्यवहारविदो जनाः ।
भविष्यन्त्यत्र तत्रातः परिभाषा विलिख्यते ॥ २ ॥
व्यवहारस्वरूपं च प्रथमं हि निरूप्यते ।
व्यवहारस्य भेदाश्च(२) ततः सर्वे विशेषतः ॥ ३ ॥
अष्टादश विवादस्य पदानि क्रमशस्ततः ।
चतुष्पात्त्वं हि धर्मस्य प्रासङ्गिकमतः परम् ॥ ४ ॥
सभोपवर्णनं पश्चात् चातुर्विध्येन संमतम् ।
सभ्यानां निर्णयः प[श्चात्] चातुर्विध्येन संमतः ॥ ५ ॥
देशः कालश्च तिथयोऽनुकल्पो दर्शकस्य तु ।
लिखितं साक्षिणो भुक्तिरिति प्रामाण्यनिर्णयः ॥ ६ ॥
स(?)लेख्यं सर्वप्रकारं तु साक्षिणश्च तथाविधाः ।
भुक्तिस्तु साग[मा स]र्वा सविशेषं निरूप्यते ॥ ७ ॥

(१) श्रीलक्ष्मीनृसिंहेति क. पुस्तके ।
(२) भेदाश्चेति त्रुटितं क. पुस्तके ।

दिव्यानि पञ्च शपथाश्चत्वारः समुदायतः ।
तुलादिव्यं प्रथमतो वह्निदिव्यं ततः परम् ॥ ८ ॥
जलदिव्यं ततश्चापि विषदिव्यमतः परम् ।
कोपश्च तप्तमाषश्च शपथास्तदनन्तरम् ॥ ९ ॥
अष्टादशपदेष्वादौ ऋणादानमिहोच्यते ।
प्रातिभाव्यं ततः सम्यक् निक्षेपस्तदनन्तरम् ॥ १० ॥
सम्भूय च समुत्थानं वेतनस्यानपक्रिया ।
दत्तानपक्रिया पश्चात् ततश्चास्वामिविक्रयः ॥ ११ ॥
विक्रीय[ा]सम्प्रदानं [तु क्री]त्वानुशय एव च ।
संविद्व्यतिक्रमः पश्चात् सीमाया निर्णयस्तथा ॥ १२ ॥
[स्त्री] पुंसयोगाख्यमतो विवादपदमुच्यते ।
स्त्रीसङ्ग्रहणमेवं हि सविशेषनिरूपणम् ॥ १३ ॥
दायादानां विभागश्च सम्यगत्र वि[चार्यते] ।
आदौ पुत्रविभागो हि प्रोच्यते विशदः किलः ॥ १४ ॥
विजातीयसुतानां च विभागस्तत्त्वतस्ततः ।
पितामहे धने सम्यक् पौत्राणां भागनिर्णयः ॥ १५ ॥
मात्रंशसंमितिः पश्चात् सविशेषा निरूप्यते ।
असुतस्त्रीध[नग्राहे] त्वधिकारो निरूप्यते ॥ १६ ॥
अनपत्यधनग्राहे ह्यधिकारनिरूपणम् ।
संसृष्टिनां विभागश्च समासेन निरूप्यते ॥ १७ ॥
अंशानर्हास्ततः सम्यक् सविशेषनिरूपणाः ।
अविभाज्यं ततो द्रव्यं प्रसङ्गादागतं च [यत्] ॥ १८ ॥

तत्सर्वं वक्ष्यते सम्यग् विशेषेणात्र किं बहु ? ।
स्तेयाभिधं विवादस्य पदं तु पदशः स्फुटम् ॥ १९ ॥
ततः परं साहसं तु विवादपदमुच्यते ।
अभि(ति)धेये सुविशदे ततो द्यूतसमाह्वये ॥ २० ॥
असहायं सहायं च वादिनां च भयङ्करम् ।
पारिजातांश्च सुमतान् गौतमीयं मतं तथा ॥ २१ ॥
मेधातिथिमतं सम्यक् विज्ञानेश्वरसंमतम् ।
मतं विलोक्य बहुधा दलाधीशविपश्चिता ।
श्रीनृसिंहप्रसादेन व्यवहारो निरूप्यते ॥ २२ ॥

प्रमाणतर्कसाधनः पक्षप्रतिपक्षसाधनो व्यवहारः । प्रतिज्ञोत्तर-संशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको वा । स च योगरूढिभ्यां अर्थिप्रत्यर्थिविवादतात्पर्यवान् । यौ[गि]कार्थस्तु स्मृतिकारैरुक्तः—

वि नानार्थेऽव सन्देहे हरणाद्धार उच्यते ।
नानासन्देहहरणाद् व्यवहारस्ततः स्मृतः ॥

इति भूयोऽपि कात्यायनप्रभृतिभिर्दर्शितः ।

प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे ।
साध्यभूत....योर्वादो व्यवहारः स उच्यते ॥ इति ।

स च व्यवहारः प्रभुणा द्रष्टव्यः । प्रभुर्जनपदैश्वर्यवान् समर्थः । तत्र मनुः—

व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिः सार्द्धं विनीतः प्रविशेत्सभाम् ॥
( म. ८–१ ) इति ।

तत्रासीनः स्थितो वापि पाणिमुद्यम्य दक्षिणम् ।
विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम् ॥ (म. ८—२)
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक् ॥ ( म.८—३)
धर्मासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत् ॥

( म. ८—२३ ) इति।

अयं हि व्यवहारारम्भे विधिःप्रतीयते । विधिश्चेष्टसाधनतारूपो व्यवहारे निर्णीत इष्टफलतां सूचयति । अर्थिप्रत्यर्थिनोर्विवादविषया व्यवहारास्तानिति यावत् । निर्णयेच्छयैव दिदृक्षा तद्वानिति यावत् । पृथिवीपतिः पार्थिवः क्षत्रियोऽन्यो वा । ब्राह्मणैः प्रथमवर्णैः । मन्त्रज्ञैर्देशकालोचितकार्याकार्यनिरूपणाभिज्ञैर्ब्राह्मणैरिति व्यवधानेन विशेषणविशेष्यभावः । प्रत्यासत्त्याश्रयणेऽन्यतरवैयर्थ्यम् इन्प्रत्ययान्तमन्त्रिशब्द-मन्त्रज्ञशब्दयोः समानार्थत्वात् । अमन्त्रज्ञत्वे हि ब्राह्मणानां देशकालाद्यनुरूपधर्माभिधानेऽपि राज्ञो[ऽ]मर्षतयाऽभिधानमनुचितमेवेति युक्तं ब्राह्मणानां विशेषणम् । मंत्रिभिः बुद्धिसचिवैः विनीतः सहजाहार्योभयविनययुक्तः। पाणिमुद्यम्य, उत्तरीयादुद्धृत्य वस्त्रोपसंव्यानं ( वस्त्रोपव्यानि? ) कृत्वेति यावत् । पश्येन्निश्चिनुयात् । दर्शनस्य व्यवहारविषयत्वा(स्या)सम्भवेन निश्चय एवात्र दर्शनम् । ऋणादानादीनि कार्याण्यभिमतानि । देशदृष्टो हेतुः देशविशेषव्यवस्थितं निर्णयसाधनम् । शास्त्रदृष्टो हेतुः साक्षिप्रभृतिकः । तत्प्रसिद्धमेतत् । आद्यं तु य[थो]दीच्यमध्यमेषु ते कन्यां याचमानाय यदि

भोजनदानं वृत्तं तदा इयं मया तुभ्यं प्रत्तेत्यनभिभाषणेऽपि प्रतिश्रुतां मन्यन्ते इति । अनेनैवाभिप्रायेणावोचन्योगिनः—

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुरोधेन क्रोधलोभविवर्जितः ॥ (या.स्मृ. २-१.) इति ।

अन्य [सम्बन्धे]न विरोधेन स्वात्मसम्बन्धिसत्त्वासत्त्वकथनं(१) व्यवहारः, तस्यानेकविधत्वं व्यवहारानिति बहुवचनेनासूचि । यथा केनचिदिदं गृहादि मदीयमित्युक्तेऽन्येन उच्यते मदीयमेवादो नास्येति । इत्येवमादितया चानेकता । नृप इति । नृपग्रहणेन नॄन्पातीति व्युत्पत्त्या जनपदैश्वर्यवतोऽधिकारमाह योगी । योगस्तु रूढस्य जातिमात्रे शक्ते[ः] क्षत्रियमात्रेऽधिकारं निराह । क्षत्रियोऽपि चेत् प्रजापालनदक्षः स एव मुख्यो व्यवहारनिश्चायकः स्यात् ।

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्तव्यं परिपालनम् ॥
( मनु ७-२ ) इति ।

ब्रह्म वेदः, ब्रह्मायमिति श्रुतेः । तत्कृतः संस्कारो ब्राह्मः । यथान्यायं=न्यायशास्त्रमर्यादामनतिक्रम्य । परिपालनमित्यनेन अन्यायिनां दण्ड इत्यसूचि,

द्रष्टा च व्यवहाराणां राजा दण्डधरः स्मृतः ।

इति स्मरणात् । ततश्च नायं क्षत्रियमात्रधर्मोऽपि तु प्रजापालनाधिकृतस्यान्यस्यापि । पश्येदिति व्यवहारशुद्ध्यर्थं तच्छुद्ध्या सत्यशुद्ध्यर्थमपी[त्य]भ्यधायि । दर्शनस्याव्यापारत्वात् । विद्वद्भिरिति

(१) कथं न इति क. ख. पुस्तकयोः ।

वेदव्याकरणमीमांसाधर्मशास्त्राभिज्ञैः। ब्राह्मणैरिति क्षत्रियादिनिषेधपरम्। विशेषतः शूद्रनिषेधपरम्। तेषां सभ्यतयोपवेशने सभायामधिकाराभावात्।

ब्राह्मणो यत्र न स्याद्वै शूद्रं तु परिवर्जयेत्(१)।

इति स्मरणात्। बहुवचनात् अधिकविषमाधिकार इत्यसूचि। सहेति सहयोगे तृतीयया ब्राह्मणानामप्राधान्यं समसूचि। तथाच स्मरति पाणिनिः—"सहयुक्तेऽप्रधाने" (पा० सू० २-३-२९) इति। ब्राह्मणाप्राधान्ये[न]दर्शनान्यथादर्शनयो राज्ञ एवायं दोषो न ब्राह्मणानामिति सूचितम्। अतः सभ्योपद(२)र्शने नेदं वचः क्षमम्। राजसमक्षसभ्यमाचमक्षासभ्यविलक्षणात्क्षमभाषणविलक्षण(?)माधवसरस्वती भाषणं सर्वविलक्षणमित्युपेक्षणीयम्। तथा कात्यायनः—

विनीतवेषो नृपतिः सभां गत्वा समाहितः।
आसीनः प्राङ्मुखो भूत्वा पश्येत्कार्याणि कार्यिणाम्॥
स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः।
धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः॥
सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः।
ससभ्यः पुरुषो राजा धर्मे तिष्ठति मानवः॥

---

(१) मिताक्षरोद्धृतं कात्यायनवचनं तु इत्थम्—
ब्राह्मणो यत्र न स्याद्वै क्षत्रियं तत्र योजयेत्।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्॥ इति।

(२) सभ्योपदर्शनेनेति 'क' 'ख' पुस्तकयोः पाठः।

मनुः—

कामक्रोधौ तु संयम्य योऽर्थान्(१) धर्मेण पश्यति ।
प्रजास्तमनुवर्तन्ते समुद्रमिव सिन्धवः ॥ (मनु. ८–१७५)
तस्माद्धर्म इव स्वामी स्वयं(२) हित्वा प्रियाप्रिये ।
वर्तेत याम्यया वृत्त्या जितक्रोधो जितेन्द्रियः ॥

(मनु. ८–१७३)

यमः—

न तु पक्षान्तरं गच्छेद्विभ्रद्वैवस्वतं व्रतम् ।
समः सर्वेषु भूतेषु पश्येत्कार्याणि नित्यशः ॥

न तु पक्षान्तरं गच्छेदित्यस्यायमर्थः-पक्षपातं न कुर्यात् इति ।

गुरुः—

विप्रो धर्मक्रमस्यादिः स्कन्धः(३) शाखे महीपतिः ।
सन्ति वा पत्रपुष्पाणि फलं न्यायेन पालने(४) ॥
यथोचितं फलं तस्य भोगेन्द्रग्रहपूजनम् ।
अजेयत्वं लोकपङ्क्तिस्पर्शो स्थानं[च]शाश्वतम् ॥
विदित्वैतान् न्यायरसान् समो भूत्वा विवादिनाम् ।
त्यक्त्वा लोकादिकं राजा धर्म्यं(र्मं)कुर्याद्विनिर्णयम् ॥

---

(१) 'यथा धर्मेण' इति 'क'. 'ख'. पुस्तकयोः, उपरितनस्तु पाठः मनुस्मृतौ उपलभ्यते ।

(२) वये हित्वेति 'क' 'ख' पुस्तकयोः ।

(३) स्कन्धशाखेति 'ख' पुस्तके ।

(४) सन्ति वा यत्र पुष्पाणि फलंन्यायेन पालनमिति 'क' पु.पा. ।

राजा वृत्तिविवादानां स्वयमेव प्रदर्शनम् ।
शास्त्रदृष्टेन मार्गेण स विद्वद्भिः प्रसेव्यते ॥
तस्मान्न्यायेन राजा तु सम्यग्यत्नेन पालयेत् ।
तस्मादर्थं च राज्यं च ...विपुलं लभेत् ॥

नारदः—

धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः ।
सतां हितमतिः पश्येद्व्यवहारमनुक्रमात् ॥ (ना. स्मृ. १–३५)
सत्ये तिष्ठन् स्थितो धर्मो धर्ममूलो नराधिपः ।
सह सद्भिरतो राजा व्यवहारान्विशोधयेत् ॥
( ना. स्मृ. ३–६ ) इति ।

तस्माज्जनपदैश्वर्यवता विद्याधर्मयुक्तब्राह्मणैः सह व्यवहारो द्रष्टव्यः विधिबलात् । स च लिङ्[ा]भिधेयः स्पष्ट एव । न च जनपदैश्वर्यवान् राजा करानुग्रहेण दीनानाथानेवादण्ड्यान् दण्डयिष्यतीति वाच्यम् ; इन्द्राद्यष्टलोक[पाल]सामर्थ्यविशेषनिर्मिताष्टमूर्तिरघृष्यः पार्थिवः सामर्थ्येनेन्द्ररूपः, चारचक्षुषा सञ्चरणशीलतयाऽनिलः, महता प्रतापेन सूर्यः, सर्वलोकाल्हादकतया सोमः, सदसद्विवेकितया धर्मराजः, आत्मजीवनदातृतया वरुणः, सर्वसम्पदाधारतया कुबेरः, सर्वाधीश्वरतया ईशः प्रतिभाति यतः ।

सोऽग्निर्भवति वायुश्च[स] सोमः स[च]धर्मराट् ।
स वरुणः स कुबेरः स महेन्द्रः प्रतापतः ॥ ( मनु.७–७ )

इति वचनात् । अन्यथाकरणे मनूक्तो दोषः—

अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।

अयशो महदाप्नोति नरकं चैव गच्छति ॥

(म. ८-१२८ )॥ इति ।

तस्मान्नृपेण व्यवहारो द्रष्टव्य इति सिद्धम् ॥

स च चतुश्चरणः । तथाहि—

पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः ।

क्रियापादस्तृतीयस्तु चतुर्थो निर्णयः स्मृतः ॥ इति ।

चतुर्थस्य चतुःप्रकारमाह—

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।

चतुः प्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णयः ॥

उक्तं चतुर्णां पूर्वपूर्वबाध्यत्वमुत्तरोत्तरबाधकत्वम् ।

शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः ॥

व्यवहारः स विज्ञेयो धर्मस्तेनापि हीयते ॥ इति ।

तथा—

चतुष्पाच्च चतुःस्थानः चतुःसाधन एव च ।

चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्तितः ॥ (१)

( ना. स्मृ. १–८ )

त्रियोनिर्द्व्यभियोगश्च द्विचारो (२) द्विगतिस्तथा ।

अष्टांगोऽष्टादशपदः शतशाखस्तथैव च ॥ (३)

( ना. स्मृ. १–९ )

---

( १ ) स चतुष्पादिति नारदस्मृतौ पाठः ।

( २ ) 'द्विद्वारो' इति ना. स्मृ. । अत्रत्यौ पूर्वोत्तरार्द्धौ विपर्यस्तौ ना. स्मृ. । ( ३ ) शतशश्चेति 'क' 'ख' पुस्तकयोः ।

धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद् व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥

( ना. स्मृ. १–१० )

तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु(१) ।
चरित्रं पुस्तकं तत्र(२) राजाज्ञायां तु शासनम् ॥

( ना. स्मृ. १–११ )

सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते ।
चतुर्णामपि वर्णानां रक्षणाच्च (३) चतुर्हितः ॥

( ना. स्मृ. १–१२ )

कर्तॄनथो (४) साक्षिणश्च सभ्यान् राजानमेव च ।
व्याप्नोति पादशो यस्माच्चतुर्व्यापी ततः स्मृतः ॥

( ना. स्मृ. १–१३ )

धर्मस्यार्थस्य कामस्य (५) लोकपङ्क्ते(६)स्तथैव च ।
चतुर्णां करणादेष चतुष्कारी प्रकीर्तितः ॥

( ना. स्मृ. १–१४ )

---

(१) 'साक्षिक' इति 'क' 'ख' पु० ।

(२) 'पुस्तकरणे' इति ना. स्मृ. । "पत्रक भूर्ज चीरकसंपुटादिषु साक्षिस्वहस्तसुनिबद्धं कृत्वा यो व्यवहारः प्रवर्तते स चरित्रमित्युच्यते" इति ना. स्मृ. व्याख्यायाम् ।

(३) चतुर्णामाश्रमाणां चेति ना. स्मृ. ।

(४) 'कर्तॄन् साक्षिण' इति 'क' 'ख' पुस्तकयोः ।

(५) 'यशसो' इति ना. स्मृ. ।

(६) 'लोकपङ्क्तिर्जनानुरागः' इति ना. स्मृ. व्या. ।

कामात्क्रोधाच्च लोभाच्च त्रिभ्यो यस्माच्च वर्तते।
त्रियोनिः कीर्त्यते येन त्रयमेव (१) विवादकृत्॥
(ना. स्मृ. १-२६)

द्व्यभियोगस्तु विज्ञेयो शंकातत्त्वाभियोगतः (२)।
शङ्काऽसतां (३) तु संयोगात् तत्त्वं होढादिदर्शनात्॥
(ना. स्मृ. १-२७)

पक्षद्वयाभिसम्बद्धो द्विद्वारः स उदाहृतः।
पूर्वपादस्तयोः पक्षः प्रतिपादस्तदुत्तरः॥
(ना. स्मृ. १-२८)

भूतच्छलानुसारित्वाद्विगतिः स उदाहृतः।
भूतं सत्त्वार्थसंयुक्तं प्रमादाभिहितं छलम्॥
(ना. स्मृ. १-२९)

राजा सपुरुषः (४) सभ्याः शास्त्रं गणकलेखकौ।
हिरण्यमग्निरुदकमष्टाङ्गः स उदाहृतः॥
(ना. स्मृ. १-१५)

प्रौढश्रीद्विजराजवंशतिलकालंकारहीरप्रभुः।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः॥

---

(१) 'त्रयमेतद्' इति ना. स्मृ.।
(२) 'शङ्कायत्वे'ति 'क' 'ख' पुस्तकयोः।
(३) 'सकासतां' इति 'क' पुस्तके। 'सिकासतां इति 'ख' पुस्तके।
(४) 'सत्पुरुष' इति नारदीये।

श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डल-मण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर-श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंह-प्रसादे व्यवहारसारे व्यवहारस्वरूपम् ॥

## व्यवहारपदानि ।

अथ अष्टादशपदान्युच्यन्ते ।

अथ व्यवहारपदम् ॥

व्यवहारो हि प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मकः । तस्य प[दं] विषयः । तद्धि तदा यदाऽयं धर्मशास्त्रसमाचारविरुद्धेन कर्मणा(नाम)परिभूतो राज्ञे कार्यमावेदयति । तच्चाष्टादशधा । तदुक्तं—

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥

( या. स्मृ. २–५ ) ।

उशना अपि—

कार्यमुद्दिश्य यत् किञ्चिद्यः कश्चिद्राज्ञि वेदयेत् ।

पदं तदष्टादशधा वि(१)वादानां प्रकीर्तितम् ।। इति ।

ततश्चाष्टाद [शवि] षयान्यतमविषयको विवादो व्यवहारः ।

यथोक्तं मनुना—

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।
सम्भूय च समुत्थानं दत्तस्यानपकर्म च ।।

( मनु॰ ८–४ )

वेतनस्यैव चादानं संविदश्च [व्यतिक्र]मः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ।।

( मनु॰ ८–५ )

सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ।।

( मनु॰ ८–६ )

स्त्रीपुंधर्मौ विभागश्च द्यूतमाह्वय एव च ।
*(२)[पदा] न्यष्टादशैतानि व्यवहारस्थिताविह ।।

( मनु॰ ८–७ ) इति ।

ऋणादानं ह्युपनिधिः सम्भूयोत्थानमेव च ।
वेतनस्या [न] पाकर्म तथैवास्वामिविक्रयः ।।

( ना॰ स्मृ॰ १–१६ )

---

( १ ) अत्र मध्ये 'क'पुस्तके किंचित्त्रुटितमिव मत्वा अधस्तनपङ्क्तौ पूरितं तत्कीटभक्षितप्रायम् असम्बद्धं च। यथाश्रुते न कापि पद्यहानिः।

( २ ) ** चिह्नान्तर्गतो ग्रन्थः 'ख' पुस्तके त्रुटितः ।

दत्तस्य पुनरादानमशुश्रूषाभ्युपेत्य च ।
विक्रीयासम्प्र [दानञ्च]*क्रीत्वानुशय एव च ॥
( ना. स्मृ. १–१७ )

समयस्यानपाकर्म विवादः क्षेत्रजस्तथा ।
स्त्रीपुंसयोश्च सम्बन्धो दायभागोऽथ साहसम् ॥
( ना. स्मृ. १–१८ )

वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेव च ।
द्यूतं प्रकीर्णकं चैवेत्यष्टादशपदः स्मृतः ॥ इति ।
( ना. स्मृ. १–१९ )

····मताइकं(?) (१)ऋत्विग्याज्यं शौल्किकं ३ । दत्तप्रदानिके ·यमदेयं दत्तमदत्तं चेति ४ । अशुश्रूषाभ्युपगमे शुश्रूषाभेदः, अशुभकर्मभेदः, शुभकर्मभेदः (२), शिष्यवृत्तं, अन्तेवासिवृत्तं, भृतकवृत्तं अ(ा)धिकर्मकृद्वृत्तम् , स्वामिप्रसादाद्दास्यविमोक्षश्चेति । वेतनस्यानपाकर्मणि—भृतकवेतनं, गोपालादिकं, पण्यस्त्रीशुल्कविधानं, शकट(३)-विकल्पश्चेति ४ । अस्वामिविक्रये च स्वामिविक्रयो(४)निधिलाभश्चेति

---

( १ ) सम्भूयसमुत्थाने सामवायिकं, ऋत्विग्याज्यम्, शौल्किकं चेति त्रयो भेदाः ना. स्मृ. व्याख्यायां दर्शिताः ।

( २ ) 'क' पुस्तके अशुभेत्यादि द्विर्लिखितम् । अशुश्रूषाप्रकारा नव नारदेन उक्ताः—'नव भेदा अशुश्रूषे'ति ( ना. स्मृ. १–२२ ) अत्र तु न्यूना एवोल्लिखिताः ।

( ३ ) भाटक विकल्पश्चेति ना. व्या. ।

( ४ ) 'अस्वामिविक्रय' इति ना. व्या. ।

भेदद्वयम् । विक्रीयासम्प्रदानमेकभेदम् । क्रीत्वानुशये कालभेदः, परभुक्तवासोनियमः, धातुक्षयः, तांत(?)वश्चेति(१) भेद[चतुष्टय]म् । समयस्यानपाकर्म एकभेदम् । तथा क्षेत्रजे क्षेत्रवादः, नियातवादः, उद्यानवादः, निपानवादः, आयतनवादः, ग्रामवादः, चतुष्पथादिदूषणप्रतिषेधः, सेतुविधानं, खि(ख)लविषयः, सस्यरक्षा, सस्यवृद्धिः, हेतुविधिः, सस्यापराधे पालभिमत(?)श्चेति द्वादश(?) भेदाः । स्त्रीपुंसयोश्च सम्बन्धे पतिपत्नीविधानं, पुंस्त्वपरीक्षा, षण्ढपरीक्षा, कन्यादातृनियमः, ऋत्विग्व्यतिक्रमो दोषः, कन्यादानकालः, कन्यावरयोरदूष्यदूषणापराधः, विवाहविधिः, स्वैरिण्यादिविधानं, अपत्यभागविवेकः, सङ्ग्रहणकविधानं, स्त्रीव्यतिक्रमदण्डः, गुरुतल्पगलक्षणं, पश्वादिगमने दोषः, पत्युरभावेऽपत्यविधिः, जारजातविधानम्(२) ।

ननु धर्मादीनां पादत्वमयुक्तं, प्रतिज्ञोत्तरप्रमाणनिर्णयानां याज्ञवल्क्येन व्यवहारोपदेशाभिधानात् । तथाहि—

चतुष्पाद् व्यहारोऽयं विवादेष्वपि दर्शितः ।

(या. २–८) इति ।

तथा बृहस्पतिरपि—'पूर्वपक्षः स्थितः पाद' इति । नेदं

---

(१) धातुक्षयभेदः, तान्तवसंस्कारश्चेति ना० व्या० ।

(२) नारदेन तु स्त्रीपुंससम्बन्धे २५ भेदा उक्ताः (ना.स्मृ.१–२३)। ऋणादानादिप्रकीर्णकान्तानां मिलित्वा १३२ भेदास्तेनोक्ताः (ना. स्मृ. १–२०) अत्र तु बहूनां व्यवहारपदानां भेदास्त्वनुक्ताएव ।

सम्यक्, धर्मादीनां प्रकारान्तरेण पादत्वोपपत्तेः। निर्णयचरणास्तु धर्मादिनिष्पाद्यतया बृहस्पतिनोक्तः—'धर्मेण व्यवहारेणे'ति। तथा निर्णयहेतु(त)ता धर्मादीनां व्यवहारभागता। यत्र दोषकारी तु स्वधनस्वामी स्वकं वर्णावधं निवारयितुमिच्छेत्, व्यवहारादिप्रयासमन्तरेण धर्माभिमुखाद्धनापहारिणः स्वकीयं च न प्राप्नोति, तत्र दोषकारिणो धर्माभिमुख्यमेव निर्णयकारणम्, व्यवहारोऽपि निर्णयहेतुः। यत्र धर्मशास्त्रकुशलैः पण्डितैः वादिप्रतिवादिनोरग्रे निर्णयार्थं धर्मशास्त्रं प्रख्यापितं भवति, स च निर्णयो व्यवहारलभ्यः। तदुक्तम्—

स्मृतिशास्त्रं तु यत्किञ्चित्प्रथितं धर्मसाधकैः।
कार्याणां निर्णयार्थे तु व्यवहारः स्मृतो हि सः॥ इति।

चरित्रं निर्णायकम्—

यद्यदाचर्यते तेन धर्म्यं वाऽधर्म्यमेव च।
देशस्याचरणं नित्यं चरित्रं तद्धि कीर्तितम्॥ इति।

राजशासनमपि निर्णयहेतुः। न्यायशास्त्रं व्यवहारकर्तृस्मृतिशास्त्रं देशाचाराविरोधि।

अथ सभा। सैव धर्माधिकरणम्। राजगृहात्प्राग् दिशि धर्माधिकरणभूता सभा कर्तव्या। तदाह कात्यायनः—

धर्मशास्त्रविचारेण मूलसारविवेकतः।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत्॥

अत्र हि राजसभाव्यवहारकाले बहवो लोका वादिप्रतिवादिभ्यां सह धर्माधिकरणमागच्छन्ति। तत्र केचिज्ज्ञानिनः, केचिज्ज्ञाना-

भिमानिनः । यदि साकोटनं निषिद्धा न भवन्ति ततस्ते सभ्यानेव अनेकवादवाक्यैर्विक्षोभाद् द्रावयन्ति । परस्परं वादकलकलकारिणो भवन्ति । तदर्थमिदं वाच्यं, ये सभायां सभ्या व्यवहारदर्शननियुक्ताः तानेव केवलान् मुक्त्वा यः कश्चिदनियुक्तः तटस्थितः कोऽपि किञ्चिद्वदति स राज्ञा विनयं ग्राह्यः । "नानियुक्तेन वक्तव्य (ना. स्मृ. ३–२)" मित्यागमबलात् । अतोऽविनियुक्तेन न वक्तव्यम् । नियुक्तेन तु सभ्येन [धर्मा]सनस्थेन केवलं धर्ममूर्तिना केवलं धर्मशास्त्रोक्तमेव व्यवहारनिर्णयवचनं तदेव वक्तव्यम् । न पुनर्वादिप्रतिवाद्य(दि)न्यतमपक्षपाताश्रितमिति । तदुक्तम्—

नियुक्तो वाऽनियुक्तो वा शास्त्रज्ञो वक्तुमर्हति ।
दैवीं वाचं स वदति यः शास्त्रमुपजीवति ॥

( ना. स्मृ. ३–२ )

दैवीं वाचं स वदतीति, शास्त्रं हि देवभाषा । राज्ञाऽपि त एव सभ्याः कर्तव्याः येऽध(व) र्मभाषिणो न भवन्ति । तदाह परमर्षिः—

श्रुताध्ययनसंपन्नाः कुलीनाः सत्यवादिनः ।
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥

( याज्ञ. २–२ ) (१)

श्रुतं मीमांसाव्याकरणश्रवणम्, अध्ययनं गुरूच्चारणानूच्चारणम्, तेन सम्पन्नाः । ततश्चैवंविधाः सभ्याः कर्तव्याः । तदाह—

---

(१) 'राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः' इति याज्ञवल्क्यीय पुस्तकेषु पाठः ।

सह सद्भिरतो राजा व्यवहारान् विशोधयेत् ।

( ना. स्मृ. ३–६ )

शुद्धेषु व्यवहारेषु शुद्धिं यान्ति सभासदः ।
शुद्धिश्च तेषां धर्माद्धि धर्ममेव वदेत्ततः ॥

( ना. स्मृ. ३–७ )

यदा हि राजा स्वयं व्यवहारान् विशोधयेत्, तदा शुद्धेषु व्यवहारेषु सभासदः शुद्धा भवन्ति । अयं भावः, दुराराध्योऽपि लोक एवं वदेत्, यत्र राज्ञा प्रत्यक्षेणायं व्यवहारो दर्शितः तत्रावश्यं सभासदः शुद्धा एवेति । अन्यथा दोषोऽपि श्रूयते—

ये तु सभ्याः सभां प्राप्य तूष्णीं ध्यायन्त आसते ।
यथाप्राप्तं न ब्रुवते सर्वे तेऽनृतवादिनः ॥

( ना. स्मृ. ३–११ )

पादो धर्मस्य कर्तारं पादः साक्षिणमृच्छति ।
पादः सभासदः सर्वान् पादो राजानमृच्छति ॥

( ना. स्म. ३–१२ )

राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥

( ना. स्मृ. ३–१३ )

तत्र यौ वादिप्रतिवादिनौ व्यवहारमत्सरारूढौ धर्माधिकरणमुपस्थितौ, न तौ द्वावपि सत्यौ न चापि द्वावप्यसत्यौ, तयोरवश्यमेकः सत्योऽपरोऽसत्यः स्यात् । तत्र यदाऽसत्यस्यैव सभासदो विजयं प्रयच्छन्ति, पराजयं च सत्यस्यैव, तदा तस्य क्षुद्रव्यवहारस्य

यत्पापमेनःशब्देनोक्तं तच्चतुर्धा भवति, कर्तृ-साक्षि-सभासद्-राज-गामि भवति । यदा तु निन्दार्ह एव [निन्द्यते] सत्यस्य जयः असत्यस्य पराजयः, तदा सर्वे धार्मिकाः निःपापा एव ।

अत्र राज्ञा सभायां व्यवहारकाले एवंविधाः सभ्याः उपवेष्टव्याः । तत्रानुकल्पं दर्शयति—

अपश्यता कार्यवशात् [व्यवहारं] नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥

इति । ( याज्ञ. २–३ )

राज्ञः कार्यवशादनवसरे धर्मतत्ववित् ब्राह्मणो नियोक्तव्यः । तादृशब्राह्मणासम्भवे क्षत्रियं वैश्यं वा नियुञ्जीत । [त]दुक्तं कात्यायनेन—

ब्राह्मणो यत्र न स्याच्चेत्क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेदिति ॥

सभ्यतयैव वर्जनं न राजतया, जनपदैश्वर्य्यवानभ्यक्षश्चेद्दण्डकरणाशक्तश्च भवतु तदा सभापतिः । नृप इत्यत्र नॄन् पातीति व्युत्पत्त्या जनपदैश्वर्यवत एवाधिकारात् । ततश्च द्विजातीनामनुकल्पः । तथाह—

स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैः प्रौढै(१)र्द्विजोत्तमैः ।
धर्म्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैरिति ॥

अथ सभ्यसंख्या । ते च त्रयः कार्याः 'बहुवचनस्यार्थवत्त्वात्'कपि-

---

( १ ) प्रौढैरित्यस्य स्थाने मौलैरिति मिताक्षरोद्धृत कात्यायनवचने पाठः । मौलैः पितृपितामहादिपरम्परायातैरिति बालम्भट्टी ।

ऽलाधिकरणन्यायस्यापि यथा कथंचित्सावकाशत्वात् । तदाह मनुः—

यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।

( मनु॰ ८—११ ) इति ।

तथा बृहस्पतिरपि—

ते लोकवेदशास्त्रज्ञाः सप्त पञ्च त्रयोऽपि वा ।

यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभेति ॥

अथ विभागकालः ।

दिवसस्याष्टमं भागं मुक्त्वा कालं सुसम्विशेत् ।

स कालो(१) व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ।

दिवसमष्टधा कृत्वा प्रथमभागमग्निहोत्राद्यर्थं मुक्त्वाऽनन्तरं भागत्रयं व्यवहारकालः । अथ तिथयः । (२)सम्वर्तः—

चतुर्दशी अमावास्या पौर्णमासी तथाष्टमी ।

तिथिष्वेतास्व तनुयात् व्यवहारांस्तु नित्यशः ॥

सभायाश्चातुर्विद्ध्यं प्रसंगेन—

प्रतिष्ठिताऽप्रतिष्ठिता मुद्रिता शासिता तथा ।

चतुर्विधा सभा प्रोक्ता सभ्याश्चैव चतुर्विधाः ॥

---

( १ ) 'अकाले' इति 'क''ख' । उपरितनस्तु मयूखधृतः पाठः ।

( २ ) "वर्ज्यास्तिथीश्चाह संवर्तः-

चतुर्दशी अमावास्या पौर्णमासी तथाऽष्टमी ।

तिथिस्वासु न पश्येत व्यवहारान्विचक्षणः" ॥

इति यूवराहखेव्यम ।

चला अप्रतिष्ठिता, अचला प्रतिष्ठिता ।

अत्र वर्ज्याः सभ्याः—

देशाचारानभिज्ञा ये नास्तिकाः शास्त्रवर्जिताः ।
उन्मत्तलुब्धक्रुद्धाश्च(१) न प्रष्टव्या विनिर्णये ॥ इति
न्यायाङ्गान्यग्रतो धृत्वा सभ्यशास्त्रमते स्थितः(२) ॥
बलेन चतुरंगेण यतो रञ्जयते प्रजाः ।
दीप्यमानः स्ववपुषा तेन राजाऽभिधीयते ॥
विवादे पृच्छति(३) प्रश्नं प्रतिप्रश्नं तथैव च ।
प्रियं पूर्वं (४)प्राग् वदति प्राड्विवाकोऽभिधीयते ॥

नारदः—

अष्टादश पदानीह तद्भेदाष्टसहस्रवित् ? (५) ।
प्राड्विवाक इति यौगिकी संज्ञा ।

अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट् तयोर्वचनं विरुद्धमविरुद्धं च

---

(१) 'उन्मत्तक्रुद्धलुब्धार्ता' इत्यपरार्कधृतबृहस्पतिवचने पाठः ।

(२) न्यायगास्यग्रतो धृत्वा सभ्यशास्त्रगतस्त्रिभिरिति 'क' 'ख' पा० । उपरितनस्तु अपरार्कधृतवृद्धबृहस्पतिवचने पाठः । एतत्पूर्वार्द्धस्तु तत्र—'राजा कार्याणि सम्पश्येत्प्राड्विवाकोऽथवा द्विजः' इति ।

(३) 'पशुभि'रिति 'क' 'ख' पुस्तकयोः ।

(४) प्रियपूर्वमित्यपरार्कधृत वृ० बृहस्पतिवचने पा० ।

(५) एतद्वचनं नारदीये नोपलब्धम्, किन्तु 'एषामेव प्रभेदोऽन्यः द्वात्रिंशदधिकं शतम्' इति (ना०स्मृ० १–२०) । शतमष्टोत्तरं शतमिति पाठस्तु असङ्गतः, अग्रे तेनैव द्वात्रिंशदधिकशतप्रभेदप्रदर्शनात् । वस्तुतस्तु अत्रायं पद्यार्धोऽप्रसक्त एव ।

(विविधं) यः सभ्यैः सह विविनक्ति विवक्तीति वा विवाकः। प्राट् चासौ विवाकश्च प्राड्विवाकः।

यथोक्तराजादियुक्तायां सभायां दशाङ्गानि सप्रयोजनान्याह बृहस्पतिः—

नृपोऽधि(र्थि)कृतसभ्याश्च स्मृतिर्गणकलेखकौ।
हेमाग्न्यम्बुस्वपुरुषाः साधनांगानि वै दश॥
दशानामपि चैतेषां कर्म प्रोक्तं पृथक् पृथक्।
वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्यपरीक्षकाः॥
स्मृतिर्विनिर्णयं ब्रूते जयं दानं (दीन) धनं(१)तथा।
शपथार्थे (सपत्नाद्यैः) हिरण्याग्नी जलं तृषितक्षुब्धयोः(२)॥
गणको गणको गणयेदर्थं लिख्येन्न्यायं च लेखकः।
प्रत्यर्थिसभ्यसमये साक्षिणो ये तु पूरुषाः(३)॥
वाग्दण्डश्चैव धिग्दण्डो विप्रार्थे नियतावुभौ।
अर्थदण्डवधावुक्तौ (४)राजायत्तावुभावपि॥
राज्ञा ये विहिताः सम्यक् कुलश्रेणीगणादयः।

---

(१) जयदानं दमं तथेति अपरार्कधृतबृहस्पतिवचनम्।

(२) अम्बु तृषितजन्तुष्वित्यपरार्कीयबृ० वचनम्। तृषित-क्षुब्धयोरिति वीरमित्रोदये।

(३) प्रत्यर्थि सभ्यानयनं साक्षिणां च स्वपूरुषः।
कुर्यादलक्ष्यकौ रक्षेदर्थिप्रत्यर्थिनौ सदा॥
इत्यपरार्कीवृ० व०। एतदत्र न्यूनम्, तद्विना ग्रन्थासङ्गतेः।

(४) 'अयं दण्ड उभा उक्तौ' इति 'क' 'ख'। स्मृतिचन्द्रिका-विगतस्तपरितनः।

साहसन्यायवर्ज्यानि कुर्युः कार्याणि ते नृणाम् ॥

यथाविधि विचारेणेति । कात्यायनः—

सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥

वैपरीत्ये दोषो मनूक्तः—

अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति ॥

( मनु० ८–१२८ ) ॥

इदानीं सभ्यफलं बृहस्पतिः—

अज्ञानतिमिरोपेतान् संदेहपटलान्वितान् ।
निशामं यन्यः १ कुरुते शास्त्राहननशंकया । (१)
इह कीर्तिं राजपूजां लभते स्वर्गतिं च सः ॥
लोभद्वेषादिकं त्यक्त्वा यः कुर्यात्कार्यनिर्णयम् ।
शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत् ॥

विपक्षे दोषोऽभिहितः—

न्यायशास्त्रमतिक्रम्य सभ्यैर्यत्र विनिश्चितम् (ते) ।
तत्र धर्मो ह्यधर्मेण हतो हन्ति न संशयः ॥
इमं न्यायं प्रवृत्तं तु नोपेक्षेत सभासदः ।

---

( १ ) 'निरामयान्यः कुरुते शास्त्राञ्जनशलाकया' इति स्मृतिचन्द्रिकायाम् ।

उपेक्षमाणः सनृपो नरकं यात्यधोमुखम् ॥(१)
न्यायमार्गानुपेतं तु ज्ञात्वा कृत्यं महीपतेः ।
कर्तव्यं तत्प्रियं तत्र न सभ्यः किल्बिषी भवेत् ॥
सभ्येन तावद्वक्तव्यं धर्मार्थसहितं वचः ।
शृणोति यदि नो राजा स्यात्तु सभ्यस्ततोऽनघः ॥
राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥
( मनु० ८-१९ ) ॥
महादीक्षायुतो वापि यो लोभादन्यथा भवेत् ।
सभ्योऽसभ्यः स विज्ञेयः तत्पापं विन्दतेतराम् ॥

याज्ञवल्क्यः—

रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक् पृथग् दण्ड्याः विवादाद्द्विगुणं धनम् ॥
( याज्ञ० २-४ ) (२)

बृहस्पतिः—

अन्यायवादिनः सभ्याः तथैवोत्कोच(३) जीविनः ।

---

( १ ) अधर्मतः प्रवृत्तं तु नोपेक्षरन् सभासदः ।
उपेक्षमाणाः सनृपा नरकं यान्त्यधोमुखाः ॥
इति अपरार्के स्मृ० चन्द्रिकायां च कात्यायनः ।

( २ ) दममिति या० स्मृ० पा० ।

( ३ ) तथैवैकोऽपि जीवित इति 'क' 'ख' । अपरार्के धृतस्तूपरितनः ।

विश्वस्य वंचकाश्चैव निर्वास्याः सर्व एव ते ॥

अनिर्णीतेषु यद्येवं संभाषेत रहोऽर्थिना ।

प्राड्विवाकोऽपि दण्ड्यः स्यात् सभ्याश्चैव विशेषतः ॥

राजप्रभृतीनां सभोपवेशनप्रकारः । पूर्वाभिमुखश्चोपवेशनप्रकारः[राज्ञः]।

*पूर्वामुखश्चोपविशेद्राजा, सभ्या उदङ्मुखाः*

सभ्या उदङ्मुखाः, गणकः पश्चिममुखः, लेखको दक्षिणास्यः । तदुक्तम्—(१)

गणकः पश्चिमास्यस्तु लेखको दक्षिणामुखः ॥

अथ व्यवहारदर्शनप्रकारः । व्यवहारो राज्ञा प्राड्विवाकद्वारा स्वयं [वा] द्रष्टव्यः ।

व्यवहारान्नृपः पश्येत्सभ्यैः परिवृतोऽन्वहम् ।

तस्यापवादः—

अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ।

सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥

( याज्ञ० २–३ )

तथा—

राजाऽभिषेकसंयुक्तो ब्राह्मणो वा बहुश्रुतः ।

धर्मासनगतः पश्येत् व्यवहारान्न तूल्बणः ॥ इति ।

नारदोऽपि—

तस्माद्धर्मासनं प्राप्य राजा विगतमत्सरः ।

(१) ** चिह्नान्तर्गतं पद्यार्धमत्रैव सङ्गतं भाति ।

समः स्यात्सर्वभूतेषु बिभ्रद्वैवस्वतं व्रतम् ॥

( ना. स्मृ. १–३४ )

व्यवहारश्च धर्मशास्त्रार्थशास्त्रानुसारेण कर्तव्यः । व्यवहारादिप्रतिपादकं धर्मशास्त्रम् । दण्डादिरूपमर्थशास्त्रम् । तदुक्तम्—

*धर्मशास्त्रार्थशास्त्राभ्यामविरोधेन पार्थिवः ।
समीक्षमाणो निपुणं व्यवहारगतिं नयेत् ॥

( ना. स्मृ. १–३७ )

धर्मशास्त्रं च—

वेदाः सांगास्तु चत्वारो मीमांसा स्मृतयस्तथा ।
एतानि*(१)धर्मशास्त्राणि पुराणं न्यायदर्शनम् ॥

अर्थशास्त्रं च भविष्यति उक्तम्—

षाड्गुण्यं स्यात्प्रयोगस्य प्रयोगः कार्यगौरवात् ।
सामादीनामुपायानां योगौ व्याससमासतः ।
अध्यक्षाणां च निक्षेपः कण्टकानां निरूपणम् ॥

ततश्च धर्मशास्त्रार्थशास्त्राभ्यां व्यवहारनिर्णयः।
विप्रतिपत्तौ तु अर्थशास्त्रोक्तं परित्यज्य धर्मशास्त्रोक्तं ग्राह्यम्,

यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ॥ इति

( ना. स्मृ. १–३९ )

---

( १ ) **एतच्चिह्नगतो ग्रन्थः 'क' पुस्तके त्रुटितः । अधोलिखितोऽपि कीटभक्षितप्रायत्वादस्तुज्ञेयः ।

नारदस्मरणात्। तत्र मनुः—

धर्मासनमधिष्ठाय स विनीतः(१) समाहितः।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत्॥

(मनु. ८-२३)

तत्र—

काले कार्यार्थिनं पृच्छेत् प्रणतं पुरतःस्थितम्।
किं कार्यं[ का च ते पी ]डा मा भैषीर्ब्रूहि मानव॥
*केन कस्मिन्कदा कस्मात् पृच्छेदेनं सभागतम्।
एवं पृष्टः स चेद् ब्रूयात् ससभ्यैर्ब्राह्मणैः सह*(२)॥

एवं निर्बन्धपृष्टो राज्ञा प्राड्विवाकद्वारा पराभूतः सन् राज्ञे कार्यं निवेदयेत्। निवेद्यमानं च व्यवहारपदं भवति। व्यवहारस्य पदं विषयः। तच्चावेदनं म[महि]रण्यादिकं गृहीत्वा न प्रयच्छति क्षेत्रादिकं वा ममापहरतीत्याद्याकारं वा भवति। तदाह याज्ञवल्क्यः—

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।
आवेदयति चेद् राज्ञे व्यवहारपदं हि तत्॥

(याज्ञ. २-५) इति।

परैरिति एकस्यैकेन द्वाभ्यां बहुभिर्वा वाद इत्यदर्शि।

एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः॥

---

(१) 'संवीताङ्ग इति मनुसंहितापाठः।

(२) **चिह्नान्तर्गतो ग्रन्थः 'ख' पुस्तके नास्ति। 'क' पुस्तके अधस्तात् भिन्नाक्षरैर्लेखकान्तरेण वा लिखितः।

इति वचनं भिन्नसाध्यविषयम् । एवं राज्ञि(१) विज्ञापिते राज्ञा स्वाज्ञादानेन प्रतिवादी आकारणीयः । अन्येऽपि नागरिका आरण्यकास्तीर्थवास्तिनस्तापसाश्च । एवं प्रत्यर्थिनि मुद्रालेख्यपुरुषान्यतमानीते वादिप्रतिवादिनोः प्रतिभुवौ गृहीत्वा प्रवर्त्तनीयश्चतुश्चरणो व्यवहारः ।

प्रतिज्ञा उत्तरं प्रमाणं निर्णयश्चेति चत्वारः चरणाः । प्रतिज्ञा हि पूर्ववादिना लेखनरूपेण कर्तव्या । उत्तरं च प्रतिवादिनो भविष्यति । लेख्यं च प्रतिवादिसंनिधे वादिना कर्तव्यम् । तच्च लेख्यं संवत्सरमासपक्षतिथिवारादिप्रतिवादिनामजातिद्रव्यतत्संख्यास्थानवेलाक्षमालिङ्गादिचिह्नितं, धर्मोपेतं, परिपूर्णं, अनाकुलमविरुद्धं, प्रसिद्धं, निश्चितं, संक्षिप्तं, निखिलार्थाऽऽवेदकं, देशकालाविरोधि नचावद्यं(?) प्रकृतार्थानुबंधि, राजनामांकितं, साधनक्षमं, प्रतिज्ञारूपं, पक्षदोषरहितं, प्रमाणागमसंयुक्तं कर्तव्यम् ।

पक्षदोषाश्च बाधायुतत्वाप्रसिद्धत्वादयः । तत्रास्मद्गृहप्रदीपेनायं व्यवहरतीति असम्बाधम् ( सम्बन्धात् ) । मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीति अप्रसिद्धम् । अस्मद्गृहसन्निधानेऽयं देवदत्तः सुस्वरमधीते इति निःप्रयोजनम् , निरर्थकं कचटतइति । लिखितसाक्षिभुक्तिप्रमाणोपेतम् , आगमो द्रव्यप्राप्तिप्रकारः तदुपेतमित्यर्थः ।

तदाह योगी—

प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।

( याज्ञ. २—६ ) इति

---

( १ ) राज्ञि इति 'ख' पुस्तके नास्ति ।

अर्थ्यते प्रत्यर्थ्यते इत्यर्थः । साध्यरूपः सोऽस्तीत्यर्थः । तत्पुरतस्तस्याग्रतः । संवत्सरस्य सर्वव्यवहारोपयोगाभावेऽप्यर्थव्यवहार उपयोगः । तथाहि यस्मिन्वत्सरे यत्संख्याकं यद्द्रव्यं यतो येन गृहीतं प्रत्यर्पितं च, पुनरन्यस्मिन्वत्सरे तद्द्रव्यं तत्संख्याकं ततस्तेन गृहीतं याच्यमानो यदि ब्रूयात्सत्यं गृहीतं प्रत्यर्पितं च नास्मिन्वत्सरे गृहीतमित्युपयोगं व्रजति । तथा—

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा । ( याज्ञ. २–२३ )

इति वचनात् आधिप्रतिग्रहक्रयेषु निर्णयार्थमुपयोगं व्रजेत् । मासादीनामप्येवमेवोपयोगः । पक्षाभासास्तु वर्जनीयाः ।

अप्रसिद्धं निराबाधं निरर्थं निःप्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥ इत्युक्तेः ।

एवं राज्ञा पूर्वपक्षशोधनिकायां कृतायां प्रतिवादिना तदनुरूपमुत्तरं दातव्यम् । तच्च पूर्वावेदकार्थिरूपवादिसन्निधावेव । पक्षप्रतिक्षेपसमर्थं न्यायादनपेतं सन्देहरहितं पूर्वापराविरुद्धं अप्रसिद्धपदप्रयोगं लेख्यम् । तदुत्तरं सम्प्रतिपत्तिः, मिथ्या, * प्रत्यवस्कंदनं, प्राङ्न्यायश्चेति । तत्र सत्यं यथा रूपकशतं मह्यं धारयतीत्युक्तौ सत्यं धारयामीति सत्यता ।

साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ।

इति वचनात् । नाहं धारयामीति*(१) मिथ्या । तच्चतुर्विधम् । मिथ्यैतदित्येकम् । न जानामि इति द्वितीयम् । [त]दा तत्सन्निधानमेव न चे[ममे]ति तृतीयम् । तस्मिन्काले अजा(ज्ञा)तश्चास्मीति

---

( १ ) **चिह्नगतो ग्रन्थो नास्ति 'ख' पु० ।

चतुर्थम् । प्रत्यवस्कन्दनं गृहीतं प्रतिदत्तं प्रतिग्रहेण लब्धमिति वा । यत्र च अभियुक्त एवं ब्रूयात्, अस्मिन्नर्थेऽहमनेनाभियुक्तः तत्रैवायं व्यवहारमार्गेण पराजित इति प्राङ्न्यायोत्तरम् । तदाह योगी—

श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।( याज्ञ॰ २-७ )

तथा—

पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥ इति ।

पक्षस्य व्यापकं निराकरणसमर्थम् । (१)······अप्रसिद्धप्रयोगादिना यद्व्याख्येयार्थं न भवति तथेति यावत् । अस्य(२) चातुर्विध्यमाह कात्यायनः—

सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा ।
पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥ इति ।

तथा

अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् ।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥

---

( १ ) अत्र ग्रन्थः 'क' 'ख' पुस्तकयोः कश्चित्त्रुटितो भाति । मिताक्षरायां त्वस्य पद्यस्य व्याख्या ईदृशी-पक्षस्य व्यापकं निराकरणसमर्थम् । सारं न्याय्यं न्यायादनपेतम् । असन्दिग्धं सन्देहरहितम् । अनाकुलं पूर्वापराविरुद्धम् । अव्याख्यागम्यं, अप्रसिद्धपदप्रयोगेण अश्लिष्टविभक्तिसमाससाध्याहाराभिधानेन वा अदेशभाषाभिधानेन वा यद् व्याख्येयार्थं न भवति तत् सदुत्तरम् । (याज्ञ. मि. २-७) इति

( २ ) उत्तरस्येति यावत् ।

मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः(१) ।
अज्ञा(२)तश्चास्मि तत्काल इति मिथ्या चतुर्विधम् ॥

( ना. स्मृ. २-५ )

अर्थिना लेखितो योऽर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयात्प्रत्यवस्कंदनं स्मृतम् ॥
आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायश्च स उच्यते ॥ इति ।

उत्तराभासाः—

अप्रसिद्धं विरुद्धं यदत्यल्पमतिभूरि च ।
सन्दिग्धासम्भवोऽव्यक्तमन्यार्थं चापि दोषवत्(३) ॥
यद्व्यस्तपदमव्यापि निगूढार्थं तथाऽऽकुलम् ।
व्याख्यागम्यमसारञ्च नोत्तरं स्वार्थसिद्धये ॥ इति ।

अप्रसिद्धं, विरुद्धम्, अत्यल्पमतिभूरि, सन्दिग्धम्, असम्भवि, अव्यक्तम्, अन्यार्थम्, दोषवत्—यद्व्यस्तपदम्, अव्यापकं, निगूढार्थम्, आकुलम्, व्याख्यागम्यम्, असारम्, एते ह्युत्तराभासाः । उत्तरलक्षणरहितः उत्तरपदवदवभासमानः उत्तराभासः । नचैतत्स्वार्थ

---

( १ ) मम तत्र न सन्निधिरिति ना. स्मृ. पा. ।
( २ ) अजात इति ना. स्मृ. ।
( ३ ) मिताक्षरापरार्कादौ त्वेतत्पद्यमनुक्त्वा—

सन्दिग्धमन्यत् प्रकृतादत्यल्पमतिभूरि च ।
पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत् ॥

इति पद्यमुल्लिखितम् ।

सिद्धये समर्थम् । तथाहि—विवादविषयस्य गोहिरण्यादिद्रव्यस्य वर्णविशेषादिकं चिह्नम्, दीर्घशृङ्गत्वादिराकारः, सहस्रादिका संख्या, संकेतः कालविशेषः सङ्केतविशेषो वा, तत्सर्वं अजानता जानता वा सभ्यानामपरिचितया भाषया यदुक्तं तदुभयमप्रसिद्धम् । बा[ल्य] एव मया सर्वं द्रव्यं दत्तमित्युक्त्वा तत्पुनर्विस्मृत्य असत्यवादिबुद्धिं मच्छादयितुं वा न दत्तमिति ब्रूयात् तद्विरुद्धम् । सुवर्णशताभियोगे पणशतं धारयामीति अत्यल्पम् । सुवर्णशताभियोगे पञ्च[शतं] धारयामीत्यतिभूरि । द्विशतं धारयामीति पक्षैकदेशव्यापि । देयं मयेत्युक्ते संदेहव्यतिरेकेण दातव्यम् । निश्चयेऽपि तदनुक्त्वा मयादेयमिति वदेत्तदा अदेयमित्यस्यापि पदच्छेदस्य क[ल्पनीय]त्वात् उत्तरं सन्दिग्धम् । षोडशवर्षप्रतिवादिप्रपौत्रेण दत्तमिति वदेत्तदसम्भवि । एकादशवस्त्राणि मया दत्तानीति वक्तव्ये रुद्रैकादशमेकानीत्याद्यप्रसिद्धैः पदैर्भाषण [ मव्यक्तम् ]। प्रकृतस्य प्रतिज्ञातार्थस्योचितमुत्तरं मुक्त्वा अनुपयुक्तमेव किञ्चिद् ब्रूते न वादिना दौर्बल्येन प्राबल्येन वा साहसं कृतमित्यादि, तत्र तस्य प्रकृतार्थस्यानुक्तत्वादुत्तरमन्या[र्थम्] । शतमात्रं देयमिति ज्ञातस्यार्थस्य शतद्वयं दत्तमित्युत्तरं दोषवत् । सार्धं सहस्रं मह्यं देयमिति ज्ञातस्य तदर्धं प्रत्यर्पितमित्युत्तरमव्यापकम् । हिरण्यवस्त्राद्यभियोगे हिरण्यं गृहीतं नान्यदिति व्यस्तपदम् । यद्वा वादिना स्वपक्षस्य सम्यक्लेखनात्पूर्वमेव मया गृहीतमित्युत्तरम् । सुवर्णशताभियोगे किमहमेव [अस्मै]धारयामीत्यत्र धनिना प्राड्विवाकः सभ्यो वाऽर्थी वा अन्यस्मै वाधारयति इति सूचयति, इति निगूढार्थम् । यद्वा मया

दत्तं पत्रं न गृहीतमिति वक्तव्ये लोके यः कोऽपि किमगृहीतं ? तामरसं प्रदास्यतीति [अ]प्रसिद्धशब्देन व्यतिरेकमुखेन काकस्वरेणाभिहित-मुत्तरं निगूढम् । पूर्वापरविरुद्धमाकुलं, यथा—सुवर्णशताभियोगे सत्यं गृहीतं, न धारयामीति । त्वत्पित्रा सुवर्णशतं [गृहीत]मित्यभि-योगे नाहं पितुर्वाच्यं जानामीति वाच्ये अन्वयव्यत्यासेन वदति वचनं (?) गृहीतमिति वचनात् सुवर्णानां पितुर्न जानामीति, तदिदमुत्तरं व्याख्यागम्यम् । न्यायविरुद्धमसारम्, शतद्वय-मन्येन सवृध्या गृहीतं तत्र दत्ता वृद्धिः स्थितं मूलद्रव्यमित्यभियोगे सत्यमेव दत्ता वृद्धिर्मूलद्रव्यं तु न गृहीतमेवेति । तदुक्तम्—'अप्रसिद्धं विरुद्धं चे'त्यादि—'नोत्तरं स्वार्थसिद्धये' इत्यन्तौ द्वौ श्लोकौ(?) । उत्तरमित्येकवचनं संकरमुत्तराणां निराह । तदाह कात्यायनः—

पक्षैकदेशे यत्सत्यं एकदेशे च कारणम् ।
मिथ्या चैवैकदेशे च संकरात्त[दनु]त्तरम् ॥
न चैकस्मिन्विवादे तु क्रिया स्याद् वादिनोर्द्वयोः ।
न चाप्रसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥ इति ।

मिथ्याकारणोत्तरयोः संकरे,

मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि ।

इत्युक्तेः अर्थिप्रत्यर्थिनोर्द्वयोरपि क्रिया[द्वय]मेकस्मिन् व्यवहारे विरुद्धम् । यथा सुवर्णं रूपकशतं[च] गृहीतमित्यभियोगे सुवर्णं न गृहीतं रूपकशतं गृहीतं प्रतिदत्तमिति । प्राङ्न्यायसंकरे तु—

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम् ।

इत्युक्तेः प्रत्यर्थिन एव क्रियाद्वयम् । अत्र प्राङ्न्यायप्रत्यर्थिभिर्नि-

भावयितव्यम् । कारणोत्तरे सान्निलेख्यादिभिः—भावयितव्यमिति विरोधः । एवमुत्तरत्रापि सर्वत्र । यथा—अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं, प्रतिदास्यामि, रूपकशतं च न गृहीतं, वस्त्रविषये पूर्वन्यायेन पराजित इति । एवं चतुःसङ्करेऽपि । एतेषां चानुत्तरत्वं यौगपद्येन, तस्य तस्यांशस्य तेन तेन विनाऽसिद्धेः । क्रमेणोत्तरत्वमेव । स च क्रमः अर्थिमत्यर्थिसभ्येच्छया जायते । यत्र तूभयसंकरे यस्य प्रभूतार्थविषयता तत्क्रियोपादानात् पूर्वव्यवहारः प्रवर्त्तयितव्यः । पश्चादल्पविषयोत्तरः(१) । उभयसांकर्ये तु यस्य प्रभूतार्थविषयत्वं तत्क्रियो[पा]दानेन व्यवहारः । सम्प्रतिपत्युत्तरयोः सांकर्ये तु उत्तरान्तरोपादानेन, सम्प्रतिपत्तेः तत्क्रियाफलाभावात् । इदं च हारीतेन—

मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं चापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥

इत्यभिधाय—

य(त)त् प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् ।
उत्तरं तत्र संज्ञेयमसंकीर्णमतोऽन्यथा ॥

इत्युक्तम् । अत्रान्यथा संकीर्णं भवतीति शेषः । असंकीर्णमिति विशेषापेक्षः क्रमो भवतीत्याशयः । एवमन्यदप्यूह्यम् । एवमुत्तरे पत्रस्थे साधनायत्तत्वात्साध्यसिद्धेः स साधनं केन वक्तव्यमित्यपेक्षिते उक्तं योगीश्वरेण—

(१) "पश्चादल्पविषयोत्तरोपादानेन च व्यवहारो द्रष्टव्य" इति मिताक्षरा ।

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् । इति (याज्ञ० २–७)।

साध्यतेऽनेनेति साधनं प्रमाणम् । यस्य साध्यमस्ति स प्रतिज्ञातार्थसाधनं लेखयेत् ।

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥

इति हारीतस्मरणात् । कथमनन्तरं साध्यसिद्धिरित्यपेक्षित उक्तं—
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा । (याज्ञ० २–८) इति ।

ततः प्रतिज्ञादयः प्रथमचरणः; उत्तरचरणो द्वितीयः, साधनचरणस्तृतीयः, साध्यसिद्धिचरणश्चतुर्थ इति निष्पन्नश्चतुश्चरणो व्यवहारः ।

तत्र व्यवहारदर्शनविधिश्च आसेधविधिपूर्वः । आसेधो राजाज्ञया अवरोधः । तथाह गुरुः—

यस्याभियोगं कुरुते सत्येनाऽऽशंकयाऽथवा ।
तमेवानाययेद्राजा मुद्रया पुरुषेण वा ॥

नारदः(१)—

देशं कालं(२) च विज्ञाय कार्याणां च बलाबलम् ।
अकल्यादीनपि शनैर्यानैराह्वाययेन्नृपः ॥ इति ।
अकल्यबालस्थविरविषमस्थक्रियाकुलान् ।
मत्तोन्मत्तप्रमत्तार्त्तभृत्यान्नाह्वाययेन्नृपः ॥
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।

(१) नारदस्मृतौ नोपलब्धमिदम् ।

(२) देशं बलमिति 'क' 'ख' पा० । उपरितनस्तु मिताक्षरादौ ।

सर्ववर्णोत्तमां कन्यां न ज्ञातिप्रभुकां(१) स्मृताम् ॥
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निःकुला याश्च पतितास्तासामाह्वानमिष्यते ॥

कात्यायनः—

धर्मोत्सुकानभ्युदये रोगिणोऽथ जडा(ना)नपि(२) ।

दुष्टदण्डमाह गुरुः—

आहूतो यस्तु नागच्छेद्दण्ड्यो बहुबलान्वितः ।
हीने कर्मणि पञ्चाशन्मध्यमेषु शतावरः ।
गुरुकार्येषु दण्ड्यः(३) स्यान्नित्यं पञ्चशतावरः ॥ इति ।
परानीकहते देशे दुर्भिक्षे व्याधिपीडिते ।
कुर्वीत पुनराह्वानं दण्डं न परिकल्पयेदिति ॥

इत्यासेधविधिः ।

तदाह योगी—

चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः । ( याज्ञ० २—८ ) इति ।

सम्प्रतिपत्त्युत्तरे द्विपाद एव भवेत् । साधनाभावात्साध्यसिद्धत्वाभावाच्च । अन्योऽपि नियमः ।

पूर्ववादं परित्यज्य योऽन्यमारभते पुनः ।
वादसंक्रमणो ज्ञेयः पूर्ववादी स वै न(त)र (ना०स्मृ०२—२४) इति ।

---

( १ ) ता ज्ञातिप्रभुकाः स्मृता इति मिताक्षरायां पाठः ।

( २ ) अस्योत्तरार्द्धस्तु-'अस्वस्थमत्तोन्मत्तार्तास्त्रियो नाह्वाययेन्नृपः' स्मृ० चं० ।

( ३ ) 'दण्ड्यः' इति 'ख'० ।

पूर्वं (?) [अ]भियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं च नान्येन नोक्तां विप्रकृतिं नयेत् ॥ (याज्ञ. २–९)

इति । अभियुज्यते इत्यभियोगोऽपराधः । तमर्थी अनिस्तीर्यं अपरिहृत्य अभियोक्तारं न प्रत्यभियोजयेत् । अपराधेन नै [व यो] जयेदित्यर्थः । नारदेनाप्युक्तम्—

सर्वेष्वर्थविवादेषु वाक्छले नावसीदति ।
परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते ॥

(ना. स्मृ. २–२५) ।

अर्थविवादेष्वित्युक्तेर्मन्युकृतविवादेषु प्रमादा[भिधा]नेन प्रकृतादप्यर्थाद्धीयतेइत्यर्थः । अस्यापवादः—

कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च (याज्ञ. २–१०) इति । कलहो वाग्दण्डपारुष्यात्मकः । साहसं विषशस्त्रादिनिमित्तप्राणव्यापादना[दि] ।

[अथ स]भ्यानां कृत्यमभिधीयते ।

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये (याज्ञ. २–१०)

अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः ।
रक्षितो ऽसौ दिनस्यान्ते दद्याद् भृत्याय वेतनम् ॥

दुष्टलक्षणम्—

देशा [द् देशान्तरं] याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥

(याज्ञ. २–१३) ।

परिशुष्यञ्च(१)लद्वाक्यो विरुद्धं वहु भाषते(२) ।
(याज्ञ.२–१४) इति ।

निर्णेतृनिर्णये गुरुः—

एवं सो ऽनेकधा प्रोक्तो व्यवहारो मनीषिभिः ।
[तस्य] निर्णयकृद्राजा ब्राह्मणाश्च बहुश्रुताः ।।

ब्राह्मणः प्राड्विवाकाख्यः ।

विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च ।
प्रियं पूर्वं प्राग्वदति प्राड्विवाकः परः स्मृतः ॥
सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ।। इति ।

अमात्याः—

सर्वशास्त्रार्थवेत्तारमलुब्धं न्यायभाषिणम् ।
विप्रं प्राज्ञं क्रमायातममात्यं स्थापयेद् द्विजमिति ।।

विप्राभावे क्षत्रियं वैश्यं वा स्थापयेदमात्यम् ।

द्विजान्विहाय यः पश्येत् कार्याणि वृषलैः सह ।
तस्य प्रक्षरते राष्ट्रं बलं कोशं च नश्यति ।। इति ।

---

(१) स्खलद्वाक्य इति याज्ञ० पाठः ।

(२) एतदग्रे—

वाक्चक्षुः पूजयति नो तथौष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगेऽथ साक्ष्ये वा स दुष्टः परिकीर्तितः ॥ (याज्ञ. २–१५) ।

इति याज्ञवल्क्योक्तानि दुष्टलक्षणानि ।

अमात्यमित्येकवचनमुद्देश्यगतत्वा[द्]विवक्षणीयं ग्रहं सम्मार्ष्टीतिवत् । तस्माद्राजा ससभ्यः सामात्यश्च व्यवहारं पश्येत् ।

अथ क्रियाविचारणा ।

क्रिया द्विविधा । मानुषी दैविकी च । तत्र मानुषी त्रिविधा । लिखितं साक्षिणो भुक्तिश्च । तत्र लिखितमष्टप्रकारम् । साक्षी द्वादशधा । भुक्तिरेव द्विधा ।

दैवी क्रिया तु नवधा ।

तत्र कात्यायनः—

करणात्पूर्वपक्षे ऽपि उत्तरत्वं प्रपद्यते ।
अथ क्रिया सदा प्रोक्ता पूर्वपक्षप्रसाधिनी ॥
द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैका नैकधा भिन्ना ऋषिभिस्तत्ववेदिभिः ॥
साक्षिलेख्यानुमानं च मानुषी त्रिविधा क्रिया ।

अनुमानं भुक्तिः ।

साक्षी द्वादशभेदः स्याल्लिखितं त्वष्टधा मतम् ॥
अनुमानं द्विधा प्रोक्तं नवधा दैविकी क्रिया ॥

तत्र दैविकीमानुष्ययोर्मानुषी प्रबला । तदाह कात्यायनः—

यद्येको मानुषीं ब्रूयात् [ अन्यो ब्रूयात्तु वैदिकीम् ।
मानुषीं तत्र गृह्णीयात् ] नतु दैवीं क्रियां नृपः ॥
यद्येकदेशं प्राप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णाऽपि दैविकी वदतां नृणाम् ॥

मानुषयोरपि लेख्यसाक्ष्ययोः समवाये लेख्यमेव प्रबलम् ।

तथा कात्यायनः—

क्रियामदैविकीं(१) प्राहुः विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न दिव्यं न च साक्षिणः ॥

क्वचिल्लेख्यप्राबल्यम्—

पूग(२)श्रेणीगणादीनां या स्थितिः परिकीर्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥

क्वचित्साक्षिणः प्रबलता भवति । तदाह स एव—

दत्तादत्ते च भृत्यानां स्वामिना च कृते सति ।
विक्रीयादानसम्बन्धे क्रीत्वा साधनमृच्छति ॥
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेखनम् ॥

अनुमानं भुक्तिरित्येव व्याकृतं योगिना—

प्रमाणं लिखितं भुक्तिःसाक्षिणश्चेति कीर्तितम् (याज्ञ.२-२२)इति ।

क्वचिद्भुक्तेरेव प्राबल्यं कात्यायनेनोक्तम्—

द्वारमार्गक्रियाभोगे जलवाहादिके तथा ।
भुक्तिरेव हि गुर्वी स्यान्न लेख्यं न च साक्षिणः ॥ इति ।

दैविकक्रियाविषये हि व्यासेनोक्तम्—

रहःकृतं प्रकाशं च द्विविधं कार्यमुच्यते ।
प्रकाशं साक्षिभिर्भाव्यं दैविकेन रहः कृतमिति ॥

---

(१) क्रिया न दैविकी प्रोक्तेति मयूखधृतः पाठः ।
(२) दूरेति 'क' 'ख' पु. । उपरितनस्तु मिताक्षरादौ ।

प्रकाशं साक्षिभिर्भाव्यमित्यस्याप्यपवादः कश्चित्को दृश्यते—

महापापाभिशापेषु निक्षेपकरणे तथा ।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥
मणिमुक्ताप्रवालानां कूटं कृत्वाऽपहारकः ।
हिंसको वंचकश्चैव परीक्ष्याः शपथैस्तथा ॥
चिरन्तनोपांशुकृते चिरं नष्टेषु साक्षिषु ।
प्रवृत्तेष्वनुमानेषु दिव्यैः कार्यं विशोधयेदिति ॥

समयः साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेदिति ।

प्राणांतिकविवादेषु विद्यमानेषु साक्षिषु ।
दिव्यमालंबते वादी नहीच्छेत्तत्र साक्षिणः ॥
उत्तमेषु च सर्वेषु साहसेषु विचारयेत् ।
सर्वां तु दिव्यसृष्टिं च सत्सु साक्षिषु कः (कैः)प्रभुः ॥

तथा व्यासः—

न मयैतत्कृतं पत्रं कूटमे(कृतये)तेन कारितम् ।
अथवा(१)न्यकृतं पत्रं ह्यत्र दिव्येन निर्णयः ॥
यत्र स्याच्छोधनं लेख्यं तद्राज्ञः श्रावितं यदि ।
दिव्येन शोधयेत्तत्र राजा दिव्यासनस्थितः ॥
प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके ।
अत्र भू(२)तेषु कार्येषु साक्षिणो शुक्तिरेव च ॥

इति । साक्षिदिव्ययोर्विकल्पोऽप्यभिहितः । क्वचिद् दिव्यले-

(१) अधरीकृत्य तत्पत्रमर्थं इति मयूख पाठः ।
(२) बलोत्कृतेष्विति मि० म० पा० ।

ख्यादीनां विकल्प आवश्यकः प्रतीयते ऋणादौ । तथाह याज्ञवल्क्यः(१)—

ऋणे लेख्यं साक्षिणो वा भुक्तिलेख्यादयोऽपि वा ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥

ऋणादिषु लेखादय एव प्रमाणम् । तदाह कात्यायनः(२)....(?)

मुख्यानुकल्पभावो वा भुक्त्यादीनामित्याह—

चोदनाप्रतिघाते तु भुक्ति(३)लेख्यैस्तथान्वियात् ।
देशकालार्थसम्बन्धपरिणामक्रियादिभिः ॥

( ना. स्मृ. ऋणादानप्र. श्लो. २३८ )

तथा ऋणादीनां शोधनप्रकारः—

(४)चोदनाप्रतिकालेषु भुक्तिर्लेखस्तथैव च ।
तृतीयः शपथः प्रोक्तस्तैर्ऋणं शोधयेत्क्रमात् ॥

( ना. स्मृ. ऋ. २३९ )

(५)आभीक्ष्ण्यं नोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।

---

( १ ) याज्ञवल्क्यस्मृतौ नोपलब्धमिदम् । स्मृतिचन्द्रिकायामिदं कात्यायनीयत्वेनोल्लिखितम् ।

( २ ) 'क' 'ख' पुस्तकयोरत्र कश्चिद् ग्रन्थस्त्रुटितः ।

( ३ ) 'युक्तिलेशैस्तमन्वियात्' इति ना० स्मृ० ।

( ४ ) चोदना प्रतिकालं च युक्तिलेशस्तथैव च ।
………तैरेनं साधयेत्क्रमादिति ना० स्मृ० पा० ।

( ५ ) अभीक्ष्णं चोद्यमानो यः……… ।
……… परतोऽर्थं स दापयेत् ॥ इति ना० स्मृ० ।

त्रिश्चतुः पञ्चकृत्वो वा पुरतोऽर्थं समाचरेत् ॥

( ना. स्मृ. ऋृ. २३७ )

(१)भुक्तिष्वर्थसमर्थासु शपथैरेनमर्दयेत् ।

अर्थकाले बलापेक्षमग्न्यंबुसुकृतादिभिः ॥

( ना. स्मृ. ऋृ. २३६ ) इति ।

प्रमाणव्यवस्थामङ्गीकार्य(र)तया नारदः प्राह—

प्रमाणानि प्रमाणज्ञैः परिभाष्याणि(२)यत्नतः ।

स्यन्दन्तीह(३) प्रमेयाणि प्रमाणैरव्यवस्थितैः ॥

( ना. स्मृ. ऋृ. ६८ ) इति ।

प्रमाणैर्निर्णयस्य कर्तुमशक्यत्वे राज्ञेच्छया निर्णयः कर्त्तव्यः ।
तदुक्तं पितामहेन—

लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।

न च वा व्यवहारोऽस्ति प्रमाणं तत्र पार्थिवः ॥

निश्चेतुं ये न शक्या(क्ताः) स्युः कार्ये सन्दिग्धरूपिणः ।

तेषां नृपः प्रमाणं स्यात् भग्नकार्याभिभूतये ॥ इति ।

साक्षिणो लिखितं भुक्तिः प्रमाणं त्रिविधं विदुः ।

लिङ्गोद्देशस्तु भुक्तिः स्याद्दिव्यानीह तुलादयः ॥

अथ प्रमाणं निरूप्यते—

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।

---

( १ ) युक्तिष्विति ना० स्मृ० ।

( २ ) परिकल्प्यानीति ना० स्मृ० ।

( ३ ) सीदन्तीहेति ना० स्मृ० ।

एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥

( याज्ञ. २–२२ )

प्रमीयते परिच्छिद्यतेऽनेनेति प्रमाणम् । तच्च द्विविधं, मानुषं दैविकं च । मानुषं त्रिविधं, लिखितं भुक्तिः साक्षिणश्च । तत्र लिखितं द्विविधं, शासनं चीरकं च । साक्षिणो वक्ष्यमाणलक्षणाः । भुक्तिरुपभोगः । ततोऽप्यागमोऽधिकः । आगमः स्व( तत् )त्वहेतुः प्रतिग्रहक्रयादिः । तदाह—

आगमोऽप्यधिको भोगात् विना पूर्वक्रमागतात् ।

( याज्ञ. २–२७ )

इति । तदाहुर्नारदमहर्षयः—

आगमेन विशुद्धेन भोगो[याति]प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥

( ना. स्मृ. ऋ. ८५ ) इति ।

सागमो दीर्घकालश्चाऽविच्छेदोपरवोज्झितः(१) ।
प्रत्यर्थिसन्निधानश्च परिभोगोऽपि पञ्चधेति ॥

ननु आगमसापेक्षोभोगः प्रमा[णमि]त्युक्तम् । तथाहि आगमः प्रमाणांतराऽवगतोऽनवगतो वा ? आद्ये तेनैव स्वत्वसिद्धौ

---

( १ ) परवाश्रितः इति 'क' 'ख' । "विच्छेदान्तरो य उपरव आक्रोशस्ताभ्यामुज्झितो रहितः । यद्वा च्छेदो व्यवधानं तद्विगमवान् विच्छेदः निरन्तर इति यावत् । अपरवो वर्जनविषयो रवः । मदीयं क्षेत्रादि त्वया किमिति भुज्यते इति निषेधः । अपशब्दस्य वर्जनार्थत्वात् । तेनोज्झितः" इति वीरमित्रोदये ।

नान्यापेक्षा । द्वितीये कथमागमविशिष्टो भोगः प्रमाणमुच्यते ? प्रमाणान्तरावगतागमसहित ए[व नि]रन्तरो भोगः कालान्तरे स्वत्वं गमयति । अवगतोऽप्यागमो भोगरहितो न कालान्तरे स्वत्वं गमयितुं समर्थः । मध्ये दानक्रियादिना स्वत्वापगमसम्भवात् । तत आगमसहितो भोगः भोगसहितश्चागम इति । तस्मात्सागमो भोगः प्रमाणमिति स्थितम् ।

आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।
कारणं भुक्तिरेवैका सम्भूता या चिरंतनी ॥
आगमस्तु कृतो(१) येन सोऽभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥
( याज्ञ. २–२८ )

आगमस्तकृतो येन समय(२)स्तमनुद्धरन् ।
न तत्सुतस्तत्सुतो वा भोग्यहानिस्तयोरपि ॥
योऽभियुक्तः परेतः स्यात् तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥
( याज्ञ. २–२९ )

तथाऽऽरूढस्य(३) वादस्य प्रेतस्य व्यवहारिणः ।
पुत्रेण सोऽर्थः संशोध्यो न तं भोगो(४)निवर्तयेत् ॥
( ना. स्मृ. ऋ. १३ )

---

( १ ) स्वीकृत इति 'क' ।
( २ ) स दण्ड्यस्तमनुद्धरन् इति मयूखादौ धृतः पाठः ।
( ३ ) तथाऽऽरूढविवादस्येति ना० स्मृ० ।
( ४ ) न तं भोगपदं नयेदिति ना० स्मृ० ।

नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥

( याज्ञ॰ २–३० )

कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः ।
प्रतिष्ठा व्यवहाराणां गुर्वेषामुत्तरोत्तरम् ॥

( ना॰ स्मृ॰ १–७ )

बलोपाधिविनिर्वृत्तान्व्यवहारान्निवर्त्तयेत् ।
स्त्रीनक्तमन्तरागारबहिःशत्रुकृतांस्तथा ॥

( याज्ञ॰ २–३१ )

मत्तोन्मत्तार्त्तव्यसनिबालभीतादियोजितः ।
असंबद्धकृतश्चैव व्यवहारो न सिद्ध्यति ॥

( याज्ञ॰ २–३२ )

गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः ।
विरोधे तु मिथस्तेषां व्यवहारो न सिद्ध्यति ॥

प्रणष्टाधिगतं देयं नृपेण धनिने धनम् ।
विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ॥

( याज्ञ॰ २–३३ )

प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ।
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् ॥

( मनु॰ ८–३० )

आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः ।

दशमं द्वादशं वापि सतां धर्ममनुस्मरन् ॥

( मनु. ८–३३ )

राजा लब्ध्वा निधिं दद्यात् द्विजेभ्योऽर्धं द्विजः पुनः ।
विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः ॥

( याज्ञ. २–३४ )

ममायमिति यो ब्रूयात् निधिं सत्येन मानवः ।
तस्याददीत षड्भागं राजा द्वादशमेव वा ॥

( मनु. ८–३५ )

आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।
कारणं भुक्तिरेवैका सन्तता या चिरंतनी ॥
पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥

( याज्ञ. २–२४ )

परेण भुज्यमानाया भूमेरित्यन्वयः । परेण सम्बन्धेन भुज्यमानां भुवं धनं वा पश्यतः अब्रुवतः मदीयेयं भूमिस्त्वया न भोक्तव्येत्यप्रतिषेधतः तस्या भूमेर्विंशतिवार्षिकी अप्रतिषिद्धविंशतिवर्षोपभोगनिमित्ता हानिर्भवति । धनस्य तु दशवार्षिकी हानिः । किंच,

अनागमं च यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥ इति ।

( ना. स्मृ. ऋ. ८७ )

एतदपि अनागमोपभोगस्य स्वत्वहेतुत्वे विरुध्यते । न चान-

योः(१) क्रमेण प्रत्यक्षपरोक्षविषयता युक्तिमती । "अनागमं तु यो भुङ्क्ते" इत्यविशेषश्रवणात् । तथा च कात्यायनः—

नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ।

पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥ इति ।

समक्षभोगेन हानिकारणाभावेन कार्यहानेरसम्भवात् ततोऽस्य वचनस्यायमेव सत्योऽर्थः । भूधनयोः फलहानिरिह विवक्षिता न वस्तुहानिर्नापि व्यवहारहानिः । तथाहि निराक्रोशं विंशतिवर्षोपभोगादूर्ध्वं स्वामी न्यायतः क्षेत्रं लभते अप्रतिषेधरूपस्वापराधादेतद्वचनाच्च । परोक्षभोगे तु विंशतेरूर्ध्वमपि फलानुसरणं लभते एव, 'पश्यत' इत्युक्तेः । तस्मात्स्वाम्युपेक्षालक्षणापराधादस्माच्च वचनाद्विंशतेरूर्ध्वं न लभत इति स्थितम् । तेनैवं धनस्य दशेति व्याकृतम् ।

कृतोत्तरक्रियावादो लेख्यसाधनमुद्दिशेत्(२) ।

सामन्तलक्षणोपेता भुक्तिर्वा चिरकालिकीति ॥

साधनशब्दः साक्षिवाची । गृहक्षेत्रविवादेषु लिखितं साक्षिणः भुक्तिर्वा कीर्त्तनीया ।

लिखितं साक्षिणो भुक्तिः प्रमाणत्रयमिष्यते ।

प्रमाणेषु स्मृता भुक्तिः सलेख्या सम्मता नृणाम्(३) ।

---

(१) 'अनागमं च यो भुङ्क्ते' इत्यस्य परोक्षभोगविषयता, 'पश्यतो ब्रुवतो भूमे'रित्यस्य प्रत्यक्षभोगविषयत्वमिति क्रम इति भावः ।

(२) 'श्रुत्वोत्तरं क्रियावादे लेख्यं साधनमुद्दिशे'दिति स्मृ० च० धृतः पाठः ।

(३) 'भुक्तेः सल्लेख्यसमते'ति स्मृ० च० ।

इति स्मरणात् । नृणां प्रमाणेषु मानुषप्रमाणेषु द्वयं श्रेष्ठमिति यावत् । क्वचित्ताभ्यां भुक्तिरेव श्रेष्ठा ।

रथ्या(दि)निर्गमनद्वारे जलवाहादिसंशये ।
भुक्तिरेव च गुर्वी (चतुर्थी) स्यात् प्रमाणेष्विति निश्चयः ॥

नारदः—

विद्यमानेऽपि लिखिते जीवत्स्वपि च साक्षिषु ।
विशेष[त]ः स्थावराणां यन्न च भुक्तं न च(१) स्थितिः ॥
( ना. स्मृ. ऋ. ७७ )

योगी—

आगमेऽपि बलं नैव भुक्तिः स्तोकाऽपि यत्र नो ।
( याज्ञ. २–२७ ) इति ।

अनेनागमलेख्यादेर्दोषाशङ्कानिवारणाय स्तोकाऽपि भुक्तिरनुग्राहकमेव न प्रमाणमित्युक्तम् । तदाह कात्यायनः—

शक्तस्य सन्निधावर्थो यस्य लेख्येन भुज्यते ।
दशवर्षाण्यतिक्रान्तं तल्लेख्यं (२)दोषवर्जितमिति ॥

गुरुः—

विद्यया क्रयबन्धेन शौर्यभार्या(३)र्थयोगतः ।
सपिण्डस्याप्रजस्यांशः स्थावरं सप्तधा स्मृतम् ॥

---

( १ ) 'यन्न भुक्तं न तत्स्थिर'मिति ना० स्मृ० ।

( २ ) 'दशवर्षाणि निःक्रान्तं लेख्यदोषविवर्जितम्' इति 'क' 'ख' । स्मृ. चं. गतोऽत्र गृहीतः ।

( ३ ) भार्यान्वयागत इति स्मृ० च० वी० मित्रोदयादौ ।

पित्र्ये लब्धक्रयाधाने वाक्य(१)शौर्यप्रवेदनात् ।
प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात् ॥
क्रमागतः शासनिकः क्रयाधानागमान्वितः ।
एवंविधस्तु यो भोगः स तु सिद्धिमवाप्नुयात् ॥
संविभागक्रमप्राप्तं पित्र्यं लब्धं च राजतः ।
स्थावरं सिद्धिमाप्नोति भुक्तहानिमु(म)पेक्षया ॥
प्राप्तमात्रं येन भुक्तं स्वीकृत्यापरिपन्थिनम् ।
तस्य तत्सिद्धिमाप्नोति हानिं चोपेक्षया तथा ॥
अध्यासना[त्] (२)समारभ्य भुक्तिर्यस्य विघातिनी ।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेदिति ॥

विधया प्रतिग्रहादिना । बन्ध आधिः ।

संवर्त्तः—

भुज्यमाने गृहक्षेत्रे विद्यमाने तु राजनि ।
भुक्तिर्यस्य भवेत्तस्य न लेख्यं तत्र कारणमिति ॥
सागमेन तु भोगेन भुक्तं सम्यक् सदा तु यत् ।
आहर्ता लभते तत्तु नापहार्यं च (न) तत्कचित् ॥
पित्रा भुक्तं तु यद्द्रव्यं युक्ताचारेण धर्मतः ।
तस्मिन्प्रेते न वाच्योऽसौ भुक्तिप्राप्तं हि तस्य तत् ॥
त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याऽभावेऽपि तां तत्र चतुर्थः पुरुषोऽन्वियात्(ताम्) ।

(१) वाक्येत्यस्य स्थाने रिक्थेति वी० मि० ।
(२) अध्यासनात् परिग्रहात् इति वी० मि० ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाज कुलानुगः प्रथमया यः शाखयाऽलंकृतः ॥
श्रीमद्वल्लभ सूनुरात्मनिरतः सत्संप्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि चतुरे श्रीमान्दलाधीश्वरः ॥
निजामसाह साम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरंधरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे प्रमाणनिरूपणम् ॥

---

## साक्षिनिरूपणम् ।

अथ साक्षी निरूप्यते ।

चक्षुषा श्रोत्रेण समीक्ष्य दर्शनात् साक्षी "साक्षाद् द्रष्टरि संज्ञायाम्" ( पा. सू. ५–२–९१ ) इति पाणिनिस्मरणात् ।

*स[मक्षं द]र्शनात् साक्षी दर्श[नात्] श्रवणादपि ।

स द्विविधः कृतोऽकृतश्च। तत्र कृतः पञ्चविधः अकृतः षड्विधः। (तत्राद्यः) प्रथमे–लिखितः स्मारितः यदृच्छाभिज्ञः गूढ उत्तरसाक्षी

च । उत्तरे—ग्रामः प्राड्वि[वा]कः*(१) राजा कार्याधिकारी प्रहितः कुल्याः। एते कुलविवादे साक्षिणः कार्याः । तथाच विष्णुः(२)—

समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यतीति ।

तथा मनुः(३)—

एकादशविधः साक्षी शास्त्रदृष्टो मनीषिभिः ।
कृतः पञ्चविधो ज्ञेयः षड्विधोऽकृत उच्यते ॥
लिखितः स्मारितः श्चैव यदृच्छाऽभिज्ञ एव च ।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः ॥
अर्थिना स्वयमानीतो यो लेख्ये सन्निवेश्यते ।
स साक्षी लिखितो नाम, स्मारितः पत्र(द)कादृते ॥

स च तेनैव विवृतः—

यस्तु कार्यप्रसिध्यर्थं दृष्ट्वा कार्यं पुनः पुनः ।
कार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते ॥
प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः ।
द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ ॥
(४)यः श्राव्यते स्थिरो गूढो गूढसाक्षी स उच्यते ॥

---

(१) **चिह्नगतो ग्रन्थः 'ख' पुस्तके नास्ति ।

(२) इदं मनु (८–७४) संहितायामुपलभ्यते ।

(३) श्लोकद्वयमिदं मनु० सं० नोपलभ्यम् । किन्तु ना० स्मृ० (ऋ० प्र० १४९–१५० ) ।

(४) एतत्पूर्वं "अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचने स्फुटम्" । इत्यर्धं मिताक्षरावीरमित्रोदयादिभिरुदाहृतमत्र न्यूनम् ।

साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते ।

श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ॥

षड्विधस्यापि अकृतस्य भेदो नारदेनोक्तः—ग्रामश्च प्राड्विवाकश्चेति ।

अन्ये पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः(१) ।

ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥

( ना॰ स्मृ॰ ऋ॰ १५१ )

कार्येष्वाभ्यन्तरो यश्च अर्थिना प्रहितश्च यः ।

कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥ इति ।

( ना॰ स्मृ॰ ऋ॰ १५२ )

तथा गुरुः—

लिखितो लेखितो गूढः स्मारितः कुल्य(ल)दूतकौ(२) ।

याहच्छश्चोत्तरश्चैव कार्यमध्यगतोऽपरः ॥

नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ।

प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः ॥

जातिनामाभि(नि)लिखितं येन स्वं पित्र्यमेव च ।

निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः ॥

---

( १ ) षडेते पुनरुद्दिष्टाः साक्षिणस्त्वकृताः स्वयमिति ना॰ स्मृ॰ पाठः ।

( २ ) 'कुलदूषकः' इति 'क' 'ख' पाठः । स चाशुद्धः । तथा सति द्वादशसंख्याऽपूरणात् । अतोऽत्र मयूखवीरमित्रोदयादिधृत एव आदृतः ।

अर्थिना च क्रिया(क्रियां)भेदैस्तस्य कृत्वा ऋणादिकम् ।
प्रत्यक्षं लिख्यते यश्च ले(लि)खितः स उदाहृतः ॥
कुड्यव्यवहितो यस्तु श्राव्यते ऋणिभाषितम् ।
विनिह्नुते यथाभूतं गूढसाक्षी स कीर्तितः ॥
आहूय यः कृतः साक्षी ऋणन्यास(य)क्रियादिके ।
स्मार्यते च विवादार्थं सर्वं........? ॥(१)

साक्षिप्रयोजनम् ।

संदिग्धेषु च कार्येषु द्वयोर्विवदमानयोः ।
दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तिदर्शनम् ॥

( ना. स्मृ. ऋ. १४७ )

तल्लक्षणम्—

यादृशा धनि(र्म)भिः कार्या व्यवहारेषु साक्षिणः ।
तादृशान्संप्रवक्ष्यामि यथावदनुपूर्वशः ॥(२)

( मनु. ८–६१ )

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥

( याज्ञ. २–६८ )

---

( १ ) अस्य स्थाने "स्मार्यतेऽयो मुहुश्चैव स्मारितः सोऽभिधीयते" इति पठित्वा अग्रे बृहस्पत्युक्तानि कुल्यादीनां साक्षिणां लक्षणानि वी० मि० दर्शितानि ।

( २ ) यथा वाच्यमृतं च तैरिति मनु सं० पाठः ।

त्र्यवराः साक्षिणो ज्ञेयाःश्रौतस्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ इति ।

( याज्ञ. ८–६९ )

त्र्यवराः त्रयः अवराः येषां ते त्र्यवराः । त्रिभ्योऽर्वाङ्न भवन्ति परास्तु यथाकामं भवन्ति इत्यर्थः । जातिमनतिक्रम्य यथाजाति । जातयो मूर्धावसिक्ताद्याः अनुलोमजाः, प्रतिलोमजाः । ततश्च मूर्द्धावसिक्तानां मूर्द्धावसिक्तास्साक्षिणो भवन्ति । तथाम्बष्ठादिषु । ब्राह्मणानां ब्राह्मणा एव। स्त्रीणां साक्ष्यं स्त्रियः एव कुर्युः । तदुक्तं मनुना—

स्त्रीणां साक्ष्यं स्त्रियः कुर्युः ।

( मनु. ८–६८ ) इति ।

तथा व्यासोऽपि—

धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः ।
श्रोत्रियानपराधीनाः सूरयश्चाप्रवासिनः ॥
युवानः साक्षिणः कार्याः ऋणादिषु विजानता ।
सर्वधर्मविदोऽलुब्धा विपरीतांश्च वर्जयेत् ॥

साक्ष्ये वर्ज्यानाह मनुः—

नार्थसम्बन्धिनो नाप्ताः न सहाया न वैरिणः ।
न दृष्टदोषाः कर्तव्याः न व्याध्यार्ता न दूषिताः ॥

( मनु. ८–६४ )

न साक्षी नृपतिः कार्यो न कारुककुशीलवौ ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥

( मनु. ८–६५ )

नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् ।
न वृद्धो न शिशुर्नैको नान्त्यो(मान्यो) न विकलेन्द्रियः ॥
( मनु. ८–६६ )

नार्त्तो न मत्तो नोन्मत्तो न क्षु(स)त्तृष्णोपपी(न पं)डितः ।
( मनु. ८–६७ )

मत्तः पानादिना, उन्मत्तः ग्रहाविष्टः, तथा अन्येऽपि वर्ज्याः ।

दास–वैकृतिक–कितव–ग्रामयाजक–महापथिक–आचारहीन–क्लीब-अग्निरहित–अयाज्ययाजक-शूद्रापति-औपपतिक–दास-दासी-वेश्या-वेश्यागामि–नास्तिक–ज्ञाति–सनाभ–विषजीवि–नृपद्विष्ट–नृपद्वेषि-नक्षत्रसूचक–पररन्ध्रान्वेषणशील–पतित–कूटकारक–शत्रुगामि-नट–मातृष्वसृसुत–पितृष्वसृसुत–मातुल–तत्सुत–विषसंग्रहनियुक्त–सर्पग्राहि–गृहदाहादिकर्तृ–कीनाश–कृपण–क्लान्त-खिन्न-निर्धन-बहिष्कृत–प्रतिलोमज–दुराचार–समावृत्त–नैष्ठिकब्रह्मचारि-मन्दबुद्धि–दृष्टिसूचक-नक्षत्रसूचक-ज्योतिषि-परदोषप्रकाश-भङ्गवृत्ति-मद्यविक्रयि-देवताव्याजद्रव्योपार्जक–दाम्भिकारूढपतित–भेदक-पिशुन-भक्त–राजपुरुषप्रभृतयो न साक्षिणः । कात्यायनः—

पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा ।
नगरग्रामदेशेषु नियुक्ता ये पदेषु च ।
वल्लभाश्च न पृच्छेयुर्भक्ता ये राजपूरुषाः ॥ इति ॥

भवदीयो विवादः कथमिति [न] प्रष्टव्यं तैः । साक्षिणो न भवन्ति इत्यर्थः । एते न प्रष्टव्याः । पित्रादयः स्नेहपराः, श्रोत्रियादयः परापकर्षभीरवः, दासीवेश्यामद्यपादयः परापकर्षनिरताः । अन्ये

यथायथमुपकारापकारनिरताः । केचनोदासीनाः केचिद् द्वेषिणः केचिन्मूर्खाः केचिदन्यथा यथा कथञ्चिदित्यसाक्षिणः ।

पूर्वोक्ता एकादशविधा उक्तलक्षणा एव ग्राह्याः ।

तत्र संख्यामाह बृहस्पतिः—

नव सप्त पञ्च वा स्युः चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ ख्यातौ नैकं पृच्छेत्कदाचन ॥
लिखितौ द्वौ तथा गूढौ त्रिचतुःपञ्च लेखितौ ।
याहच्छाः स्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः ॥
दूतकः खटिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यात् नृपोऽध्यक्षस्तथैव च ॥

कुल्यादीनां लक्षणं गुरूक्तं—

विभागदाने विपणे ज्ञातिर्यत्रोपदिश्यते ।
द्वयोः समानो धर्मज्ञः स कुल्यःपरिकीर्त्तितः ॥
अर्थिप्रत्यर्थिवचनं शृणुयात् प्रेषितश्च यः ।
उभयोः सम्मतः साधु दूतकः स उदाहृतः ॥
क्रियमाणे तु कर्त्तव्ये यः कश्चित्स्वयमागतः ।
अस्तु साक्षित्वमस्माकमुक्तो याहच्छिकस्तु सः ॥
यत्र साक्षी दिशं गच्छेत् समूषु(१)र्वा यथाश्रुतम् ।
अन्यं संश्रावयेत्तं तु विद्यादु[त्तर]साक्षिणम् ॥
साक्षिणामपि यः पक्षमुपर्युपरि भाषते ।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ॥

(१) मुमूर्षुरिति वी० मि० ।

उभाभ्यां यस्य विश्वस्तं कार्यं वापि निवेदितम् ।
कूटचारी स विज्ञेयः कार्यमध्यगतस्त[था] ॥

उभाभ्यामर्थिप्रत्यर्थिभ्याम् । कात्यायनः—

अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ।
स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ॥

बृहस्पतिः—

निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
[अ]ध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥
दूषि(मूषि)तं घातितं यच्च सीमायाश्च समन्ततः ।
अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः इति ॥

साक्षिश्रावणमाह योगी—

साक्षिणः श्रावयेद्व[ादि] प्रतिवादिसमीपगान् ।
( याज्ञ. २–७३ )

कात्यायनः—

सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिनाऽनेन सत्वरम् ॥
सत्यं साक्ष्यं ब्रुवन् साक्षी लोकात्प्राप्नोति पुष्कलान् ।
इह स्यात्तस्य देवत्वं यस्य सत्ये स्थिता मतिः ॥
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ॥
कुबेरादित्यवरुणशक्रवैवस्वतादयः ।
पश्यन्ति लोकपालाश्च नित्यं दिव्येन चक्षुषा ॥
द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः ।

रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ॥

( मनु. ८–८६ ) इति ।

व्यासः—

बध्यन्ते वारुणैः पाशैः साक्षिणोऽनृतवादिनः ।
षष्टिवर्षसहस्राणि तिष्ठन्ति नरके ध्रुवम् ॥
तेषां वर्षशते पूर्णे पाश एकः प्रमुच्यते ।
सूकरो दशवर्षाणि गर्दभः पञ्चविंशतिम् ॥
कृमिकीटपतङ्गेषु चत्वारिंशत्तथैव च ।
वानरो जायते पश्चात्संपरित्यज्य बान्धवान् ॥
सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैश्च पातकैः ॥

( मनु. ८–११३ )

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिः शुचीन् ॥

( मनु. ८–८७ )

आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान्विदिताचारान् विज्ञातार्थान्पृथक् पृथक् ॥

( ना. स्मृ. ऋ. १९८ )

श्रावणप्रकारमाह योगी—

ये पातकिकृतां लोका महापातकिनां तथा ।

( याज्ञ. २–७३ )

अग्निदानां च ये लोकाः ये च स्त्रीबालघातिनाम् ।
स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥

( याज्ञ॰ २–७४ )

सुकृतं यत्त्वया किञ्चिद् जन्मान्तरशतैः कृतम् ।
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥

( याज्ञ॰ २–७५ )

जन्मप्रभृति यत्किञ्चित्पुण्यं भद्र त्वया कृतम् ।
तत्ते सर्वं शु(हि) नो गच्छेत् यदि ब्रूयास्त्वमन्यथा ॥

( मनु॰ ८–९० )

एवं(१) दोषानवेक्ष्य त्वं सर्वथाऽनृतभाषणे ।
यथाश्रुतं यथादृष्टं सत्य(२)मेवाञ्जसा वद ॥

( मनु॰ ८–१०१ ) इति ।

अथ साक्षिणामुक्तिप्रकार उच्यते वसिष्ठेन—

प्राङ्मुखोपस्थितः साक्षी शपथैः शापितः स्वकैः ।
हिरण्यं गोशकृद्दर्भान् तान्संस्पृश्य वदेद् व्रतम् ॥

गुरुः—

विवाहोपानदुष्णीषौ दक्षिणं पाणिमुद्धरन् ।
हिरण्यं गोशकृद्दर्भान् समादाय ऋतं वदेदिति ॥

कात्यायनः—

सभान्तःस्थैश्च वक्तव्यं साक्ष्यं नान्यत्र साक्षिणा ।
सर्वसाक्ष्येष्वयं धर्मो नित्यः स्यात्स्थावरेषु हीति ॥

---

( १ ) एतानिति मनुसं॰ पा॰ ।　( २ ) सर्वमिति मनुसं॰ पा॰ ।

न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥

( याज्ञ. २-७७ )

यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत् ।
तत्तत्कार्यं निवर्तेत कृते चाप्यकृतं भवेत् ॥

( मनु. ८-११७ )

द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥

( याज्ञ. २-७८ )

श्रुताध्ययनतदर्थानुष्ठानधनपुत्रादिगुणसम्पन्नास्तेषां वचनं ग्राह्यम् ।

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥

( याज्ञ. २-७९ )

स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनः ॥
उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः ।
द्विगुणा वान्यथा ब्रूयुः कूटाःस्युः पूर्वसाक्षिणः ॥

( याज्ञ. २-८० ) इति ।

पूर्वनिर्दिष्टानामसम्भवे साक्ष्यंतरमेव कार्यं न दिव्यम् ।
सम्भवे साक्षिणां प्राप्तौ दिव्यं तु परिवर्जयेत् ।
इति स्मरणात् । यदि कूटसाक्षिणः सप्ताहमध्ये रोगाग्निजाति-

मरणानि स्युस्तदा दंड्यः । ततः साक्षिभिः सत्यमेव वाच्यम् । क्वचिदसत्यमपि वाच्यम्,

वर्णिनां च वधो यत्र तत्र साक्ष्यनृतं वदेत् ।

इति स्मरणात् ॥

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतः सत्संप्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाह साम्राज्यधुरन्धरमहीपतिः ।
श्री नृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरंधरश्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे साक्षिनिरूपणम् ॥

# अथ लेख्यं निरूप्यते ।

तत्र लेख्यं द्विविधं शासनं जानपदं च । जानपदं च द्विविधं स्वहस्तकृतमन्यकृतं च । तत्र स्वहस्तकृतमसाक्षिमत् । राजशासनं त्रिविधम्, इतरत्सप्तविधम् । तथाच गुरुः—

देशाचारयुतं वर्षमासपक्षादिवृद्धिमत् ।
ऋणिसाक्षिलेखकानां हस्तांकं लेख्यमुच्यते ॥
राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा ।
लेख्यं तु त्रिविधं प्रोक्तमाद्यन्तद्बहुधा पुनः ॥

वसिष्ठः—

लौकिकं राजकीयं च लेख्यं विद्याद्विचक्षणः ।

लौकिकं जानपदम् । संग्रहे—

राजकीयं जानपदं लिखितं द्विविधं स्मृतम् ।

राजकीयं शासनादिभेदेन चतुर्धा । तथा वसिष्ठः—

शासनं प्रथमं ज्ञेयं जयपत्रं तथाऽपरम् ।
आज्ञाप्रज्ञापनापत्रं राजकीयं चतुर्विधम् ॥

तथा बृहस्पतिः—

भागदानक्रयाधानसंविद्दासऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनमिति ॥

याज्ञवल्क्यः—

अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ।

(याज्ञ. १-३१९)

प्रतिग्रहपरीमाणं धनच्छेदोपवर्णनम् ।

( याज्ञ॰ १–३२० )

स्थानवंश्यानुपूर्व्या च देशं ग्राममुपागतम् ।
ब्राह्मणांस्तु तथा चान्यानन्यानधिकृतांल्लिखेत् ॥

तथा गुरुः—

अनाच्छेद्यमनाहार्यं सर्वभावविवर्जितम् ।
चन्द्रार्कसमकालीनं (लानां) पुत्रपौत्रान्वयानुगम् ॥
दातुः पालयितुः स्वर्गं हर्तुर्नरकमेव च ।
षष्ठिवर्षसहस्राणि दानच्छेदफलं लिखेदिति ॥

योगी—

यः कश्चिदर्थे निष्णातः स्वरुच्या तु परस्परम् ।
*लेख्यं तु साक्षिमत्कार्यं कृतेऽस्मिन्(१) धनिपूर्वकम् ।

( याज्ञ॰ २–८४ )

कात्यायनः—

राज्ञः स्वहस्तसंयुक्तं [स्व]मुद्राचिह्नितं तथा ।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ॥

लौकिकं सप्तविधम्—भाग*(२) लेख्यं दानलेख्यं क्रयलेख्यमा-

---

( १ ) 'लेख्यं वा साक्षिमत्कार्यं तस्मिन्धनिक पूर्वकम्' इति या॰ स्मृ॰ पाठः ।

( २ ) **चिह्नगतो ग्रन्थः 'ख' पु॰ नास्ति ।

धिलेख्यं मतिलेख्यम्(१) । अत्र गुरुः—

भ्रातरः संविभक्ता ये स्वरुच्या (त्वरुच्यात्तु) तु परस्परम् ।
विभागपत्रं कुर्वंति भागलेख्यं तदुच्यते ॥
भूमिं दत्त्वा तु यत्पत्रं कुर्याच्चन्द्रार्ककालिकम् ।
अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः ॥
गृहक्षेत्रादिकं क्रीत्[त्वा तु]ल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यत्र क्रय (पत्र)लेख्यं तदुच्यते ॥
जङ्गमं स्थावरं बन्धं कृत्वा लेख्यं करोति यः ।
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तदुच्यते ॥
ग्रमो(२)दसमयं कुर्यात् मतले[ख्यं परस्प]रम् ।
राजाविरोधि धर्मार्थं संवित्पत्रं वदन्ति तत् ॥
वस्त्रान्नहीनं कान्तारे लिखितं कुरुते तु यत्(यः) ।
कर्माणि ते (तु) करिष्यामि दासपत्रं तदिष्यते ॥
धनं वृद्ध्या(दद्यात्) गृहीतं तु स्वयं कुर्यात्तु कारयेत् ।
[उद्धा]रपत्रं तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥
समासेऽर्थे (३) ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं तेऽमुकपुत्रस्य यदत्रो(दत्तो)परि लेखितम् ॥

( याज्ञ. २—८६ )

---

(१) दासलेख्यं ऋणलेख्यञ्चेति त्रुटितमिव भाति ।

(२) ग्रामो देशश्च यत्कुर्यान्मतं लेख्यं परस्परमिति मयूखधृतः पाठः।

(३) मासे वर्षे इति 'क.' 'ख.' पा. ।

साक्षिणश्च(णो)ऽस्य स्वहस्तेन पितृनामकपूर्वकम् ।
अत्राहममुकः[साक्षी](ति) लिखेयुरिति ते समाः ॥

( याज्ञ० २—८७ )

उभयाभ्यर्थितेनैतत् मया ह्यमुकसूनुना ।
लिखितं ह्य(स्व)मुके(खे)नेति लेखकोऽन्ते ततो लिखेत् ॥

( याज्ञ० २—८८ )

कात्यायनः—

दत्त्वा भूम्यादिकं राजा ताम्रपट्टे पटेऽथ वा ।
शासनं कारयेद्धर्म्यं स्थानवंश्यादिसंयुतम् ॥
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम् ।
दातुः पालयितुः स्वर्ग्यं हर्तुर्नरकमेव च ॥
षष्टिवर्ष........................।(१) ।
समुद्रवर्षमासादि.....................।(२) ॥
(३)ज्ञातं मयेति लिखितं संधिविग्रहलेखकैः ।
एवंविधं राजकृतं शासनं तदुदाहृतम् ॥
देशादिकं चास्य राजा लिखितं तु प्रयच्छति ।
सेवाशौ(चौ)र्यादिना तुष्टः प्रसादलिखितं तु तत् ॥
पूर्वोत्तरक्रियावादनिर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यत इति ॥

---

( १ ) षष्टिवर्षसहस्राणि दानोच्छेदफलं लिखेत् । इति वी० मि० ।
( २ ) समुद्रं वर्षमासादिधनाध्यक्षाक्षरान्वितम् । इति वी० मि० ।

वसिष्ठः—

प्राड्विवाकादिहस्तांकं मुद्रितं राजमुद्रया ।
सिद्धेऽर्थे वादिने दद्याज्जयपत्रं तदुच्यते ॥

आज्ञाप्रज्ञापनापत्रं लिखितलक्षणम्—

आज्ञाप्रज्ञापने पत्रे द्वे वसिष्ठेन दर्शिते ।
सामन्तेष्वथ भृत्येषु राष्ट्रपा(का)लादिकेषु च ।
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥
ऋत्विक्पुरोहिताचार्यमान्येष्वभ्यर्हितेषु च ।
कार्यं निवेदितं येन पत्रं प्रज्ञापनाय तत् ॥
लिखेज्जान(ज्ज्ञात)पदं लेख्यं प्रसिद्धस्थानलेखकम् ।
राजवंशक्रमयुतं वर्षमासार्धवास(दिवत्स)रैः ॥
कालं निवेश्य राजानं स्थानं निवसनं तथा ।
दाय(ध)कं ग्राहकं चैव पितृनाम्ना च संयुतम् ॥
ज्ञातिं स्वगोत्रं शाखां च द्रव्यमादिं ससंख्य(चिन्त)कम् ।
वृद्धिं ग्राहकहस्तं च विदितार्थौ च साक्षिणाविति ॥

व्यासः—

चीरकं-स्वहस्त-उपगत-आधि-क्रय-स्थिति-संधि-विशुद्धिपत्ररूपमष्टधा(१) ।

---

(१) जानपदाख्यस्य लेख्यस्य व्यासकृता अष्टौ भेदा इत्यर्थः ।
व्यासश्लोकास्तु—

चीं(चि)रकं च स्वहस्तं च तथोपगतसंज्ञितम् ।
आधिपत्रं चतुर्थं च पञ्चमं क्रयपत्रकम् ॥

नारदः(१)—

अलिपिज्ञ ऋणी यः स्यात् स्वमतं तु स लेखयेत् ।
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपत इति ॥

विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।
तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ॥

( याज्ञ. २–८९ )

देशांतरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।
भिन्ने दग्धेऽथवा च्छिन्ने लेख्यमन्यत्तु कारयेत् ॥

( याज्ञ. २–९१ )

वर्ष(२)मासतदर्धाहर्नामजातिस्वगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥

( याज्ञ. २–८५ )

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥

( याज्ञ. २–८६ )

---

षष्ठं तु स्थितिपत्राख्यं सप्तमं सन्धिपत्रकम् ।
विशुद्धिपत्रकं चैवमष्टधा लौकिकं स्मृतम् ॥

इति स्मृ. च. । लौकिकं–जानपदमित्यर्थः । वस्तुतस्तु अत्रायं ग्रन्थोऽसङ्गतः । अग्रे अस्यैव वक्ष्यमाणत्वात् ।

( १ ) इदं ना० स्मृ० नोपलब्धम् । एतत्समानार्थकः पद्यार्धः— "आत्मनैव लिखेज्जानन् न चेदन्येन लेखयेत्" ( ना० स्मृ० ऋ० १६७) इति तु तत्रोपलभ्यते ।

( २ ) समामासेति याज्ञ. पा. ।

व्यासः—

चीरक-स्वहस्त-उ(चो)पगत-आधि-क्रय-स्थिति-संधि-विशुद्धिप-
ऋरूपमष्टधा । तत्र संग्रहकारः—

चीरकं नाम लिखितं पुराणैः पौरलेखकैः ।
अर्थिप्रत्यर्थिनिर्दिष्टं यथासंभवसंस्कृतैः ॥
स्वकीयैः पितृ(प्रति)नामाद्यैरर्थिप्रत्यर्थिसाक्षिणाम् ।
प्रतिनामभिराक्रांतमर्थिसाक्षिस्वहस्तवत् ।
स्पष्टावगमसंयुक्तं यावत्स्मृत्युक्तलक्षणमिति ॥

कात्यायनः—

ग्राहकेण स्वहस्तेन लिखितं साक्षिवर्जितम् ।
स्वहस्तलेख्यं तज्ज्ञेयं प्रमाणं तत्स्मृतं बुधैरिति ॥
आधिं कृत्वा तु यो द्रव्यं प्रयुङ्क्ते स्वधनं धनी ।
यत्त्वत्र क्रियते लेख्यमाधिपत्रं तदुच्यते ॥
धनी धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदाधिलिखितं पूर्वं चास्य समर्पयेदिति ॥

पितामहः—

क्रीते क्रयप्रकाशार्थं द्रव्ये यत्क्रियते क्वचित् ।
विक्रेत्र(त्य)नुगतं क्रेत्रा ज्ञेयं तु क्रयपत्रकमिति ॥
चातुर्विद्यः पुरश्रेणीगणपौ(सौ)रादिकस्थितिः ।
तत्सिध्यर्थं तु यल्लेख्यं स्तद्भवेत्स्थितिपत्रकम् ॥
उत्तमेषु समस्तेषु अभिशापे समागते ।
वृत्तानुवादलेख्यं यत्तज्ज्ञेयं सन्धिपत्रकम् ॥

अभिशापेन तूत्तीर्णे प्रायश्चिते कृते जनैः ।
विशुद्धिपत्रकं ज्ञेयं तेभ्यः साक्षिसमन्वितम् ॥

अन्यदप्यस्ति लेख्यम् । कात्यायनः—

सीमाविवादे निर्णीते सीमापत्रं विधीयते(१)इति ।

योगी—

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मे(ते)ऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥

( याज्ञ. २—८६ )

साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥

( याज्ञ. २—८७ )

उभयाभ्यर्थितेनैतत् मया ह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ॥

( याज्ञ. २—८८ )

दर्पणस्थं(तु)यथा बिम्बमसत्सदिव दृश्यते ।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुटिला नराः ॥ इति ।

नारदः—

देशाचाराविरुद्धं यत् व्यक्त्यादिविधि(२)लक्षणम् ।
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ॥

( ना. स्मृ. ऋ. १३६ )

---

( १ ) एतदपि लौकिकमेव लेख्यमिति स्मृ. च. ।
( २ ) व्यक्ताबधिविलक्षणम् इति ना. स्मृ. पा. ।

देशाचारविरुद्धं यत् संदिग्धं क्रमवर्जितम् ।
कृतम[स्वामि]ना यच्च साध्यहीनं च दुष्यतीति ॥
यच्च काकपदाकीर्णं तल्लेख्यं कूटतामियात् ।
बिन्दुमात्राविहीनं यत् लिखितं साक्षितं यदि ॥
दूषितो गर्हितः साक्षी यश्चैकोऽपि निवेशितः ।
कूटलेख्यं तु तत्प्राहुर्लेखको वाऽपि तद्विधः ॥
साक्षिदोषाद् भवेद् दुष्टं पत्रं वै लेखकस्य वा ।
धनिकस्यापि वै दोषान्न(१)तथा धारकस्य च ॥
संदिग्धे लेख्यशुद्धिःस्यात्साक्षिभिर्लिखितादिभिः(२) ।
युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ॥

नारदः—

यस्मिन्स्यात्संशयो लेख्ये भूताभूतकृते क्वचित् ।
तत्स्वहस्तक्रियाचिह्नप्राप्तयुक्तिभि(३)रुद्धरेत् ॥

( ना. स्मृ. ऋ. १४३ )

गुरुः—

त्रिविधस्यास्य लेखस्य भ्रान्तिः सञ्जायते यदा ।
ऋणिसाक्षिलेखकानां हस्त्योक्त्या(?)साधयेत्ततः ॥

---

( १ ) दोषात्तथा धारणकस्य वेति स्मृ. च. पा. ।

( २ ) सन्दिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः ( याज्ञ.-२-९२ ) इति या. स्मृ. पा. ।

( ३ ) युक्तिप्राप्तिभिरिति ना. स्मृ. पा. ।

अथ पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
तत्स्वहस्तादिभिः शेषं विशुध्येत न संशयः ॥
ऋणिस्वहस्तसन्देहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥
प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतः सत्संप्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाह साम्राज्यधुरन्धरमहीपतिः ।
श्री नृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरंधरश्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे लेख्यनिरूपणम् ॥

## अथ दिव्यप्रकरणम् ॥

तानि च दिव्यानि नव । तु[ला]ग्न्युदकविषकोशतण्डुलतप्तमाषफालधर्मजमिति । वस्तुतस्तु तुलादीनि कोशान्तानि पञ्चैव दिव्यानि संदिग्धार्थसंदेहविनिवृत्तये दातव्यानि । तथाहि—

तुलाग्न्यापो विषं कोषो[दिव्या]नीह विशुद्धये ।

( याज्ञ॰ २–९५ ) इति ।

ननु—

घटोऽग्निरुदकं चैव विषं कोशस्तथैव च ।

तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकम् ॥

इति पितामहस्मृतेः कथं तान्येवेति ? सत्यम् । महाभियोगेष्वेव नान्यत्रेति[निय]मात् । तुलादीनि च नियुक्तस्यैव अभियोक्तरि शीर्षकस्थे—

शिरोवर्त्ती यदा न स्यात्तदा दिव्यं न दीयते ।

( ना॰ स्मृ॰ ऋ॰ २५७ )

इति नारदस्मरणात् । शीर्षकं शिरो व्यवहारस्य यश्चतुर्थचरणो जयपराजय[लक्ष]णस्तेन च लक्ष्यते दण्डः । ततः पंचैव मुख्यानि ।

संदिग्धेऽर्थेऽभियुक्तानां प्रच्छिन्नेषु विशेषतः ।

दिव्यं पञ्चविधं ज्ञेयमित्याह भगवान्मनुः ॥

( ना॰ स्मृ॰ ऋ॰ २५१ )

इति स्मरणात् ।

वर्षासु वह्निरित्युक्तः शिशिरे तु घटः स्मृतः ।

ग्रीष्मे सलिलमित्युक्तं विषं काले तु शीतले ॥

( ना. स्मृ. ऋ. २५४ )

इति तस्यैवाभिमतम् ।

अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत् ।

तण्डुलाश्चैव कोषश्च शङ्कास्वेव न संशयः ॥

इति स्मृतेः । अथ पितामहः—

अभियोक्ता शिरःस्थाने दिव्येषु परिकीर्तयेत् ।

अभियुक्ताय दातव्यं दिव्यं श्रुतिनिदर्शनात् ॥

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।

अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥ इति ।

नारदः(१)—

अभियोक्ता शिरःस्थाने सर्वत्रैकः प्रकल्पितः ।

इच्छया त्वितरः कुर्यादितरो वर्त्तयेच्छिरः ॥ इति ।

क्वचित्तं विनापि देयं दिव्यं पार्थिवैः ।

शङ्कितानां हि लोकैश्च निर्दिष्टानां च दस्युभिः ।

आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥

लोकापवाददुष्टानां शङ्कितानां च दस्युभिः ।

तुलादीनि नियोज्यानि नाशिरस्तत्र वै भृगुः ॥

ततश्च गुरुकार्येषु महादिव्यानि । शङ्कामात्रेषु तण्डुलकोशादीनीति । तत्रापि प्रसिद्धस्तप्तमाषो महाचौर्याशङ्कायामेव ।

(१) ना. स्मृ. नोपलब्धम् ।

चौर्यशंकाभियुक्तानां तप्तमाषो विधीयते ।

इति स्मरणात् । तथा—

सत्यं वाहनशस्त्राणि गोबीजकनकानि च ।

देवतापितृपादांश्च दत्तानि सुकृतानि च ॥

( ना. स्मृ. श्लो. २४८ )

स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा ।

इत्यादयः शपथा अल्पे ।

पितामहः—

विस्रम्भे सर्वशंकासु सन्धिकार्ये तथैव च ।

एषु कोषः प्रदातव्यो नित्यं चित्तविशुद्धये ॥

शिरःस्थायिविहीनानि दिव्यादीनि विवर्जयेत् ।

धटादीनि विषान्तानि कोष एकोऽशिराः स्मृतः ॥ इति ।

ततश्चायं निश्चयः, यद्यपि लोकप्रसिध्या शपथानामपि निर्णायाकतया दिव्यव्यपदेशस्तथापि समनन्तरनिर्णयनिमित्तेभ्यो धटतप्तमाषादिभ्यः कालान्तरनिर्णयनिमित्ततया दिव्येभ्यो भेदः । कोषस्तु शपथोऽपि दिव्ये पठितः, तप्तमाषादिवन् महाभियोगविषयत्वात् । ततो न मानुषप्रमाणवत् दिव्यं प्रमाणमभावैकगोचरम् , अपि तु भावाभावविषयं गोचरयति । अर्थिप्रत्यर्थिनोरन्यतरेच्छया दिव्यं स्थावराऽस्थावरेषु । स्थावरेषु विवादेषु दिव्यानि परिवर्जयेदिति वचनं लिखितसामन्तसद्भावविषयम् । दिव्यानि च धनतरतमभावेन देयानि ।

विषं सहस्रेऽपहृते पादोने च हुताशनः ।

द्विपादोने च सलिलमर्धे देयो धटः सदा ॥

चतुःशतेऽभियोगे तु दातव्यस्तप्तमाषकः ।
त्रिशते तण्डुला देयाः शपथास्तु तदर्धके ॥

इति बृहस्पतिस्मरणात् ।

गोचोरस्य प्रदातव्यं सभ्यैः फालं प्रयत्नतः ।
एवं संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां तु कल्पनीया परीक्ष (च बीज)कैः॥ इति ।

अन्येपि—सुवर्णशतनाशे [विषम्], अशीतिसुवर्णनाशे हुताशं, [ षष्ठि ]नाशे जलं, चत्वारिंशन्नाशे धटः, त्रिंशन्नाशे कोषपानम्, पञ्चाधिकतदर्धार्धनाशे तण्डुलाः, तदर्धार्धनाशे स्वापत्यमस्तकस्पर्शः, तदर्धार्धनाशे लौकिकी क्रियेति । विष्णुः—

सर्वेषु चार्थजातेषु मूल्यं स्वर्णं च कल्पयेदिति ।

तत्र सुवर्णादिपरिमाणं—जालनिष्ठसूक्ष्मरजस्त्रिंशत्तमो भागः परमाणुः । तेऽष्टौ त्रसरेणुः । ते चाष्टौ लिक्षा । तास्तिस्रः सर्षपः । ते त्रयो गौरः । ते षट् मध्ययवः । द्वौ तौ कृष्णलः । ते पंच माषः । ते षोडश सुवर्णः । ते चत्वारः पलम् । तानि दश धरणम् । द्विकृष्णलधृतो रूप्यमाषः । ते षोडश धरणं राजतम् । स कार्षापणः* ताम्रकः कर्षकः पणः [इति]संक्षेपः । माषशब्दः सुवर्णिकषोडशभागवाची । कृष्णलशब्दः कर्षाशीतिभागवाची । सुवर्णिकशब्दः काञ्चनकर्षवचनः । पणकार्षापणशब्दौ पलचतुर्थांश*(१)ताम्रद्रव्यस्य नामधेये* पुराणधरणशब्दौ पलदशमात्रस्य नामधेये*(२)कर्षच-

(१) **चिह्नगतो ग्रन्थः 'ख' पु० नास्ति ।
(२) **चिह्नगतो ग्रन्थः 'ख' पु० नास्ति ।

त्वारिंशत्तमांशस्य रूप्यद्रव्यस्य माषसंज्ञा। निष्कशतमानशब्दौ एक-पले रूप्यद्रव्ये।

गुरुः—

ताम्रकर्षकृता मुद्रा [ विज्ञेयः ]कार्षिकः पणः इति।
स एव चाण्डिका [प्रोक्ता]ताश्चतस्रस्तु धानका।
ता द्वादश [सुवर्णास्तु]दीनाराख्यः स एवतु (सुवर्णः)॥

व्यासः—

पलान्यष्टौ सुवर्णः स्यात्सुवर्णानां चतुर्दश।
एवं निष्कप्रमाणं तु व्यासेन परिकीर्तितम्॥ इति।

अत्र जातिभेदेन व्यवस्था—ब्राह्मणस्य तुला क्षत्रियस्याग्निः वैश्यस्य जलं शूद्रस्य विषमिति नारदाभिमता। इदमनित्यं मत्वा आह कात्यायनः—

सर्वेषु सर्वदिव्यं वा विषवर्जं द्विजोत्तम इति।

योगिमते(१) स्त्रीबालवृद्धातुरान्धपंगुब्राह्मणमात्रस्य तुला अ-

---

(१) तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्।
अग्निर्जलं वा, शूद्रस्य यवाः सप्त विषस्य वा॥
(याज्ञ. २-९८)।

अत्र यद्यपि क्षत्रियवैश्ययोरनिर्देशः तथापि स्मृत्यन्तरावलोकनात् अग्निशब्दस्य फालतप्तमाषयोरुपलक्षकत्वाच्च क्षत्रियविषयत्वमेतेषाम्। वैश्यस्य जलमेव वेत्यस्य निर्द्धारणार्थत्वादिति मिताक्षराकृता व्यवस्था-पितम्। ब्राह्मणस्य तुलाविधानात् शूद्रस्य 'यवाः सप्त विषस्य वे'ति विषविधानात् अग्निर्जलं वेति 'क्षत्रियवैश्यविषयं युक्त'मिति तेनैव
"ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः।

ग्निफालतप्तमाषकाः—क्षत्रियस्य । यद्वा अग्न्यादयः सर्वेषाम् । महा-अवष्टम्भाभियोगे ब्राह्मणस्य तुलाऽग्निर्वा । वर्षासु सर्वेषामग्निरेव । क्लीब-हीन—स्वत्वहीन—पतित—बाल—वृद्ध—स्त्री—अन्धानां धटः । स्त्रीणां तु न कदाचिद्विषम् । नापि जलम् । अतस्तासां तुलाकोषौ । स्त्रीबा-लरोगिवृद्धदुर्बलानां नोदके मज्जनम् । मद्यपविधवानास्तिकानां न कोषः । पितृ—मातृ—द्विज—गुरु—वृद्ध—स्त्री—बालघाति—महापा-तकि—नास्तिक—लिङ्गि—असन्मन्त्रजापक—वर्णसंकर—जातपापा-भ्यास—प्रवर्तिनां नैव दिव्यम् , तेषामनधिकारात् ।

अथ दिव्यकालमाह । चैत्रमार्गशीर्षवैशाखेषु दिव्यं कार्यम् । शिशिरहेमन्तवर्षासु अग्निः । शरद्ग्रीष्मयोर्जलम् । शिशिरहेमन्तयो-र्विषम् । चैत्रमार्गशीर्षवैशाखमासाः । तुलाकोषौ सार्वकालीनौ । कोशेन सर्वशपथाः गृहीताः । तण्डुला अपि सर्वदैव । न मध्याह्ने नापराह्ने न सन्ध्यायां दिव्यं कार्यम् । यद्वा पूर्वाह्णेऽग्निः तुला च, मध्याह्ने जलं, मध्यरात्रे विषम् । वारस्तु रवेः । रविवारे त्रिधा विभक्तदिनपूर्वाह्णे तपस्विव्याधितस्त्रीव्यतिरिक्तानां दिव्यं देयम् ।

अथ दिव्यदेशाः—

प्राङ्मुखोदङ्मुखः कार्यः शुचौ देशे धटः सदेति

पितामहस्मरणात् । इन्द्रस्थानसभाराजद्वारचतुष्पथ(देवाय-यने)(१)षु । यथा इन्द्रस्थाने दे[वाय]तनेषु [अभि]शस्तमहापातकि-

---

वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेत्" ॥ इति पितामहाद्यनुसारेण पक्षान्तरं स्वीकृतम ।

(१) इन्द्रस्थानं प्रख्यातदेवायतनमिति स्मृ० च०।

नां, राजद्वारे नृपद्रोहप्रवृत्तानां, चतुष्पथे प्रातिलोम्यप्रसूतानाम् । चतुष्पथेऽन्येषाम्(१) ।

सर्वसाधारणेतिकर्तव्यता सर्वकार्याणि प्राड्विवाकः कुर्यात् । ततः प्राड्विवाकः[ प्राञ्ज ]जलिर्भूत्वा—

एह्येहि भगवन् धर्म अस्मिन्देशे समाविश ।
सहितो लोकपालैश्च वस्वादित्यसमग्रकैः ॥

इति धर्ममावाह्य श्वेतसुवर्णवर्णश्यामस्फटिकाभधूमसुवर्णवर्णा रक्तवर्णानिन्द्रादिलोकपालान् पूर्वादिदिक्षु क्रमेणावाह्य इन्द्रपार्श्वे दक्षिणे च वसून् धर–ध्रुव[धूम]सोम–अप्–अनल–अनिल–प्रत्यूष–प्रभासाख्यानष्टौ, देवेशानयोर्मध्ये धाता–अर्यमा–मित्र–वरुण–ईशान–भग–इन्द्र–विवस्वत्–पूष–पर्जन्य–त्वष्टृ–वि[ष्णववा]ख्यान्द्वादशादित्यान् , आग्नेयपश्चिमभागे एकादशरुद्रान् वीरभद्रशम्भुप्रभृतीन् , निर्ऋतेः उत्तरभागे गणाधीशं वरुणस्योत्तरभागे मरुतः, कुबेरोत्तरभागे दुर्गामावाह्य अर्घ्यं दत्त्वा तां तां देवतां च स्वस्वनाम्ना गन्धपुष्पादिभिरभ्यर्च्य, निवेद्य नैवेद्यं वेदपारगैर्ब्राह्मणैश्चतुर्दिक्षु समिदाज्यचरुभिः सावित्र्या प्रणवेन वा स्वाहान्तेन प्रणवादिना अष्टोत्तरशतं जु[हु]यात् । *सप्रणवा गायत्री पूर्वमुच्चारणीया । पुनः स्वाहान्तप्रणवः । उपवासत्रयमेको वा उपवासः कर्त्तव्यः । "अहोरात्रोषिते स्नात" (ना. स्मृ. ऋ. २६८) इति नारदस्मरणात् । तच्चार्द्रवाससा

(१) 'अतोऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधा' इति कात्यायनस्मरणात्सभायामन्येषामिति युक्तम् ।

कर्त्तव्यम् । इदं च नृपब्राह्मण*(१)सन्निधान एव कार्यम् । होमानन्तरमिदं कर्त्तव्यमाह पितामहः—

यं चा(यस्या)र्थमभियुक्तःस्याल्लिखित्वा तं तु पत्रके ।
मन्त्रेणानेन सहितं तत्कार्यं तु शिरोगतम् ॥

मन्त्रः—

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमिति ।

अयं च सर्वदिव्यसाधारणो विधिः । प्रयोगावसाने दक्षिणा देया ॥

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतः सत्संप्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाह साम्राज्यधुरन्धरमहीपतिः ।
श्री नृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरंधरश्रीमन्म-महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे दिव्यप्रकरणम् ॥

---

(१) *चिह्नगतो* ग्रन्थः 'ख' पु० नास्ति ।

# अथ तुलाविधिः ॥

तत्र पितामहः—

प्राङ्मुखो निश्चलः कार्यः शुचौ देशे घटः सदा ।

तत्र प्रकारस्तेनैवोक्तः ।

चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।
अन्तरं च तयोर्हस्तो भवेद्धस्तार्द्धमेव वा ।
हस्तद्वयं निखेयं(षेधं) तु पादयोरुभयोरपि ॥

इत्यादि । अयमर्थः—खदिरशिंशपाञ्जनशालवृक्षतिन्दुकीसाररक्तचन्दनादियाज्ञीयकाष्ठं पूर्ववन्मंत्रपूर्वमानीय लोकपालेभ्यो नत्वा चतुर्हस्तां तुलां तावच्चरणद्वयोपेतां हस्तहस्तार्द्धान्तरयुक्तां चतुर्हस्तोच्छ्रितां द्विहस्तायतां मुण्ड(मण्डु)कद्वये द्विहस्तनिखेय(षेधा)युक्तां(१) पार्श्वद्वयतोरणोपेतां घटोत्तरभागे च दशांगुलावलम्बिनौ तोरणाभ्यामधोमुखौ मृण्मयौ सूत्रसम्बद्धौ मस्तकचुम्बिनौ (२)विधाय पार्श्वद्वये घटकंटकद्वयोपरि शिक्यद्वयमवलम्ब्य एकशिक्ये उत्तरपार्श्वे च पुरुषमपरत्र दक्षिणपार्श्वे शिलां मृत्तिकेष्टकाशिलापांसु (स्व)नामन्यतमं निधाय सर्वाङ्गसुन्दरीं तुलामवलम्ब्य घटोपरि उदकं दत्वा तोयाच्यवनेन(३)घटसाम्यं विज्ञाय पूर्वं तत्र पुरुषं तोलयित्वा तमव-

---

(१) 'हस्तद्वयं निखेयं तु प्रोक्तं मुण्डकयोर्द्वयो'रिति व्यासस्मरणात्।

(२) तुलाप्रान्तोपरिभागद्वयस्पृशौ गोलकरूपाववलम्बसंज्ञकौ साम्यज्ञानार्थं करणीयाविति भावः ।

(३) 'यस्मिन्न प्लवते तोयं स विज्ञेयः समो घटः' इति स्मरणात् ।

तीर्थे ध्वजपताकाद्यलंकृतं कृत्वा प्रथमरोहणे निपुणैर्वणिकांस्यकारताम्रकारैः तुलाशिलाभ्यां अतिसाम्यं तुल्यतारूपमतिप्रयत्नेन अवेक्षेरन् । ततो देवानावाह्य वादित्रतूर्यघोषैः गन्धमाल्यानुलेपनरक्तगन्धमाल्यादिभिर्धटमभ्यर्च्य तत्र शिष्टान् पूजयेत् । ततः प्राड्विवाकस्तुलामन्त्रणं कुर्यात् । तत्र पितामहः—

धटमामन्त्रयेच्चैव विधिनाऽनेन मन्त्रवित् ।
त्वं धट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ॥
धकाराद्धर्ममूर्तिस्त्वं धटं तं कुटिलं नरम् ।
धृतो भावयसे यस्माद् धटस्तेनाभिधीयसे ॥

इति । योगी—

तुलाधार[ण]विद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो लेखां ल(१)ब्ध्वाऽवतारितः ॥

( याज्ञ॰ २–१०० )

त्वं तुले सत्यध(२)र्मासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥

( याज्ञ॰ २–१०१ )

यद्यस्मि पाप(न्याय)कृन्मातस्ततो मां त्वमधो नय(३) ।

( याज्ञ॰ २–१०२ )

---

( १ ) कृत्वेति याज्ञ॰ स्मृ॰ पा॰ ।

( २ ) धामासीति॰ याज्ञ॰ स्मृ॰ पा॰ ।

( ३ ) अस्याग्रे—शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् । इति याज्ञ॰ स्मृ॰ ।

एह्येहि भगवन्धर्म दिव्यमेतत्समाविश ।
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥
तस्यार्थमभियुक्तैश्च लेखयित्वा तु पत्रके ।
मंत्रेणानेन सहितं कुर्यात्तस्य शिरोगतम् ॥

आरोपितं च विनाडीपंचकं यावत्तावत्तिष्ठेत् । कालपरीक्षणं च ज्योतिःशास्त्राभिज्ञेन कर्त्तव्यम् । तत्र 'विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः' इति स्मरणात् । दशगुर्वक्षरोच्चारणकालः प्राणः, षट्प्राणा च नाडी । तदाह—

दशगुरुवर्णाः प्राणाः, षट् प्राणाः स्याद्विनाडिका, तासाम् ।
षष्ट्या घटी, घटीनां षष्ट्याहः, खाग्निभिर्दिनैर्मासः(१) ॥

'आदित्यचन्द्रे'ति मन्त्रः ।

इमं मंत्रविधिं कृत्स्नं सर्वदिव्येषु कारयेत् ।
तुलितो यदि वर्धेत शुद्धो भवति धर्मतः ॥
हीयमानो न शुद्धः स्यात् एकेषां तु समोऽशुचिः ।
अल्पपापे समो ज्ञेयो बहुपापस्तु(स्य)हीयते ॥
धर्मगौरवमाहात्म्या*दतिरिक्तो न शुद्ध्यति इति ।

व्यासः—

अधोगतिर्न शुध्येत्तु शुद्ध्येदूर्ध्वगतिस्तथा ।
समोऽपि न विशुद्धः स्यात् एषा शुद्धिरुदाहृता ॥

---

(१) षष्ट्याभिर्होमिर्दिवसैः सम इति 'क' 'ख' पा० । मिताक्षरास्थस्तूपरिधृतः ।

कद्दय(क्ष)च्छेदे(१) तुलाभंगे पतिकक्षकयोस्तथा(२)।
ऋत्विकपुरोहिताचार्यान्*(३) दक्षिणाभिश्च तोषयेत् ॥
एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान् ।
महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते ॥

इति घटविधिः ।

## अथ अग्निदिव्यप्रकारः ॥

तत्र प्रकारः । तुलाविधानाभिहितसाधारणदिव्यधर्मा[नावाहनादिपत्रा] रोप(ध)णपर्यन्तान् कुर्यात् । ततो विशेषः । तिर्यक्स्थापिता[ष्ट]यवोद(त्त)रपरिमितमङ्गुलम् । तत्र षट्पञ्चाशदधि[क]-द्विशताङ्गुलपरिमितभूमौ अष्टाङ्गुलद्विरष्टाङ्गुल(३)परिमितान्तरालं विहाय अष्टमण्डलानि पुरतो नवमं च गोमयेन कुर्य्यात् । तत्रा-

( १ ) कद्यं = शिक्यतलमिति मि० ।

( २ ) घटकर्कटयोस्तथेति मि० पा० । कर्कटौ शिक्याधारावीषद्वक्रौ आयसकीलकौ कर्कटशृङ्गसंनिभौ । अस्यार्धस्याग्रे 'रज्जुच्छेदेऽक्षभंगे च तथैवाशुद्धिमादिशेत्' इत्यर्धं मिताक्षरास्थमत्र न्यूनम् । अक्षः पादस्तम्भयोरुपरि निविष्टस्तुलाधारापट्टः इति मि० ।

( ३ ) ** चिह्नगतो ग्रन्थः 'ख' पुस्तके नास्ति ।

( ४ ) षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरमिति याज्ञवल्क्यवचनात् षोडशाङ्गुलान्यष्टौ मण्डलानि षोडशाङ्गुलप्रमाणमन्तरं विहाय कार्याणीत्यर्थः ।

[घमा]ग्नेयं; द्वितीयं वारुणं; तृतीयं वायुदैवत्यं; चतुर्थं यमदैवत्यं; पञ्चममैन्द्रं; षष्ठं कौबेरं; सप्तमं सोमदैवत्यम्; अष्टमं सर्वदैवत्यं; पुरः-स्थितं नवमं महद्दैवत्यम् । एकैकं मण्डलं द्वात्रिंशद[ङ्गुल](१)प्रमाणं भवति । तदाह महर्षिः—

द्वात्रिंशदङ्गुलान्याहुर्मण्डलान्मण्डलान्तरम् ।
अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ।
षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना ॥

तत्र नव[मं] मण्डल[म]परि[मि]तांगुलप्रमाणकम् । तद्विहायाष्टभिर्मण्डलैरष्टभिश्चान्तरालैः प्रत्येकशः षोडशाङ्गुलप्रमाणकैरङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं भवतीति तात्पर्यार्थः । इदं च क्रमण(मणी)-भूमिपरिमाणमभिहितम् । ततः शोधकद्रव्येण अभियुक्तहस्तौ सम्यक् प्रक्षाल्य अलक्तकरसेन हंसपदानि कृत्वा सप्ताश्वत्थपर्णानि शुक्ल-सूत्रनवतंतुभिर्हस्तयोर्निर्बध्य स्वकर्मकुशलं जातिलोहकारमाहूय लोहं संताप्य तच्छुद्धये तप्तं लोहमुदके निक्षिप्य पञ्चाशत्पलिकं लोहपिण्डं निर्माय त्रिःसन्ताप्याग्निवर्णसमं कृत्वा सम्यक् स्नात्वा आर्द्रवासः परिधाय प्राङ्मुखः आदित्याभिमुखः प्रसारितकराङ्गुलि-समानि अश्वत्थपर्णानि सप्त सप्त च दूर्वापर्णानि अक्षतपुष्पाणि दध्यक्तानि च अञ्जलिमध्ये निक्षिप्य तत्रैवायःपिण्डं प्राड्विवाकः स्वयमेव अभियुक्तहस्ते निक्षिप्य पूर्वोक्तमन्त्रोपेतं शिरसि पत्रं नि-

(१) मण्डलभुवोऽन्तरालभुवश्च प्रत्येकं षोडशाङ्गुलान्मिलित्वा द्वात्रिंशदङ्गुलं भवतीत्यर्थः ।

धायें[मं] मन्त्रं जपेत्—

त्वमग्ने वेदाश्चत्वारस्त्वं यज्ञेषु च हूयसे ।
त्वमग्ने सर्वदेवानां पवित्रं परमं परम् ।
त्वमग्ने सर्वभूतानां हृदिस्थो वेत्सि चेष्टितम् ॥

( ना. स्मृ. श्लो. २९१ )

सत्यानृते च जिज्ञासा त्व(सन्य)त्तः (१)समुपजायते ।
वेदादिभिरिदं प्रोक्तं नान्यथा कर्तुमर्हसि ॥

( ना. स्मृ. श्लो. २९२ )

सर्वथा न यथा मिथ्या तथाग्निं धारयाम्य[हम्](२) ।
एष धारयते च त्वां(३)सत्येनानेन मानवः ।
तदस्य सत्यवाक्यस्य शीतो भव हुताशन ॥

( ना. स्मृ. श्लो. २९४ )

इति जपित्वा—

ततस्तं समुपादाय राजा धर्मपरायणः ।
तदंशेन नियुक्तोऽथ हस्तयोस्तस्य(त्र)निक्षिपेत् ॥
त्वरमाणो न गच्छेत्तु सु(स्व)स्थो गच्छेच्छनैः शनैः ।
अष्टमं मण्डलं गत्वा नवमे स्थापयेद् बुधः ॥

ततश्चाष्ट वा सप्त वा मण्डलानि शनैर्मंडलेषु पदन्यासं कृत्वा

---

( १ ) जिह्वाया इति ना० स्मृ० पा० ।

( २ ) सर्वथा चेति ना० स्मृ० । एतत्पूर्वार्धस्तु तत्र 'अनेनायमिदं प्रोक्तो मिथ्या वेदमथाब्रवीत्' ( ना० स्मृ० श्लो० २९३ ) इति पठ्यते ।

( ३ ) एकोत्तरयसे च त्वमिति क० ख० पा० ।

गच्छेत् । नवमे मण्डले अग्नितप्तमयःपिण्डं सन्दंशेन गृहीत्वा कर्त्रा-भिमन्त्रितं तस्याञ्जलौ निदध्यात् । तत्रादग्धे शुद्धः स्यात् । इदं रविवारकृत्यं पूर्वदिनकृतम् । पूर्वेद्युर्भूतशुद्धिं विधाय मंडलानि यथा-शास्त्रं निर्माय मंडलादिदेवांस्तत्र तत्र संपूज्य अग्निमुप[समा]धाय शांतिहोमं निर्वर्त्य अयःपिण्डं हस्ते निधाय धर्मावाहनादिसर्वदेवता-पूजाहवनावसानं सर्वं कर्म कुर्यात् ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतः सत्संप्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाह साम्राज्यधुरन्धरमहीपतिः ।
श्री नृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्ड-नसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरंधरश्रीमन्म-हाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे दिव्यप्रकरणम् ॥

## अथ जलविधिः ॥

तत्र साधारणेतिकर्त्तव्यतारूपे कर्मणि धर्मावाहनादिसकलदेवतापूजादौ समन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्ते निर्वृत्ते,

तोय त्वं प्राणिनां प्राणाःसृष्टेराद्यं तु निर्मितम् ।
शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ।
अतस्त्वं दर्शयास्माकं शुभाशुभपरीक्षणम् ॥

इति प्राड्विवाकेनोदकाभिमन्त्रणं कार्यम् । तच्च स्थिरतोये । तृणशैवालरहितं मत्स्यजलौकावर्जितं देवखाततोयमनाहार्यं नदीजलम् । आहार्यं तडागादिभ्यः आहृत्य(तं) ताम्रकटाहादिनिक्षिप्तम् । नाभिप्रमाणोदक[स्थश्च] यज्ञवृक्षोद्भवधर्मस्थू(१)णामवष्टभ्य प्राङ्मुखस्तिष्ठेत् ।

उदके प्राङ्मुखस्तिष्ठेद्ध(च)र्मस्थूणां प्रगृह्य च ।

इति स्मृतेः । सप्तपद् पञ्चशतं क्रूरमध्यमंदधनुस्त्रयं विधाय आयसान्वैणावान्वा बाणान् कृत्वा निमज्जनसमकालं गते तस्मिन् जविनि एकस्मिन्पुरुषे अन्यो वेगवत्तरः शरपातस्थानस्थितः पूर्वमुक्तमिषुमानीय जले निमग्नांगं यदि पश्यति तदा शुद्धो भवतीति । अयं भावः—बाणत्रये मुक्ते एको वेगवान् मध्यमशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठत्यन्यस्तु वेगवान् बाणमोक्षस्थाने तोरणमूले तिष्ठति । एवं स्थितयोस्तयोस्तृतीयस्यां[करता]लिकायां शोध्यो निमज्जति, तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यमशरपात-

(१) धर्मस्थूणां=धर्मायःप्रतिमाम् ।

स्थानं गच्छति । शरसंग्राही च तस्मिन्प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्जलगतं यदि न पश्यति तदा शुद्धो भवतीति । तदुक्तं नारदेन(१)—

तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम् ।
मंगलं पुष्पधूपाभ्यां कारयेत्तु विचक्षणः ॥
शरांस्तु पूजयेद्भक्त्या वैणवं च धनुः सदा ।
मङ्गलैः (गडपं)पुष्पधूपैश्च ततः कर्म समाचरेत् ॥
शरांश्चा(स्ते)नायसैरग्रैः प्रकुर्वीत विशुद्धये ।
वेणुकांडमयांश्चैव क्षेप्ता च सुदृढं क्षिपेत् ॥
क्षेप्ता च क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोऽपि वा ।
अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥
इषुं न प्रक्षिपेद्विद्वान् मारुते चातिधावति ।
विषमे भूप्रदेशे च वृक्षस्थानसमाकुले ॥
क्रूरं धनुःसप्तशतं मध्यमं षट्शतं स्मृतम् ।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ॥

( ना. स्मृ. ऋ. ३०७ )

मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम् ।
हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विधानतः ॥
तेषां च प्रेषितानां तु शराणां शास्त्रचोदनात् ।
(मध्ये?)मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा ॥
शराणां पतनं ग्राह्यं सर्पणं परिवर्जयेत् ।

(१) नारदस्मृतौ नोपलभ्यन्ते ।

सर्पन्सर्पन्यदा याति दूराद् दूरतरं न सः(१) ॥

क्षिप्तैस्तु मज्जनं कार्यं गमनं समकालिकम् ।

गमने त्वागमे तुल्यं पुमानन्यो जले विशेत् ॥

अभिमन्त्रिताम्भः प्रविशेदित्यर्थः ।

स्थिरतोये निमज्जेत्तु न ग्राहिणि न चाल्पके ।

तृणशैवालरहिते जलौकामत्स्यवर्जिते ॥

देवखातेषु यत्तोयं तस्मिन्कुर्याद्विशोधनम् ।

ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ॥

नाभिमात्रजले स्थाप्यः पुरुषः स्थाणुवच्छलां? ।

तस्योरू प्रतिगृह्याथ निमज्जेदभिशस्तवान्(२) ॥

विष्णुः—

त्वमम्भः सर्वभूतानामन्तश्चरसि साक्षिवत् ।

त्वमेवाम्भो विजानीषे न विदुर्यानि[मा]नवाः ॥

व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।

तदेनं संशयादस्मात् धर्मतस्त्रातुमर्हसि ॥

शर(जव)प्रक्षेपणस्थानाद्युवा जवसमन्वितः ।

---

(१) 'सर्पन्सर्पन् शरो यायाद् दूराद् दूरतरं यतः' इति मि० ।

(२) ..............................स्थाणुवद्बली ।

तस्योरू प्रतिसंगृह्य निमज्जेदभिशापवान् ॥ इति वी० मि० पठ्यते ।

गच्छेत्परमया भक्त्या यत्रासौ(१)मध्यमः शरः ॥

( ना. स्मृ. श्लो. ३०९ )

मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।
भत्यागच्छेत्तु वे(गो)गेन यतः स पुरुषो गतः ॥

( ना. स्मृ. श्लो. ३१० )

आगतस्तु शरग्राही न पश्यति यदा जले ।
अंतर्जलगतं सम्यक् तदा शुद्धिं विनिर्दिशेत् ॥

( ना. स्मृ. श्लो. ३११ )

*कात्यायनः—

शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत्* ॥(२)

गुरुः—

आनीते मध्यमे चापे मग्नांगः शुचितामियात् ।
अन्यथा न विशुद्धिः स्यादेकांगस्यापि दर्शनात् ॥
स्थानाद्वाऽन्यत्र गमनात् यस्मिन्पूर्वं निवेशितः । इति ।
निमज्योत्प्लवते यस्तु दृष्टश्चेत्प्राणिनां नरः ।
पुनस्तत्र निमज्जेत दशचिह्नविभावितः ॥ इति ॥
प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः ॥

---

( १ ) यत्र स्यादिति ना० स्मृ० ।

( २ ) ** चिह्नगतो ग्रन्थः ख पुस्तके त्रुटितः ।

श्रीमद्वल्लभसूनुरात्मनिरतः सत्संप्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाह साम्राज्यधुरन्धरमहीपतिः ।
श्री नृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरंधरश्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे जलदिव्यविधिः ॥

---

## अथ विषविधिः ॥

तत्र प्राड्विवाकः कृतोपवासो महेश्वरं संपूज्य पुरतः कालकूटालाबुव्यतिरिक्तं हिमशैलजं शृंगप्रभवमाश्विनविषं षष्ट्यधिकशतयवपरिमितं स्थापयित्वा धर्मादिपूजाहवनांतं पूर्ववद्विधाय प्रतिज्ञापत्रं शोध्यशिरसि निधाय विषमभिमंत्रयेत् । मंत्रः पितामहोक्तः—

त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् ।
*पापेषु दर्शयात्मानं शुद्धानाममृतं भवेति ।

योगी—

त्वं विष ब्रह्मणः पुत्रः सत्ये धर्मे व्यवस्थितम् ।

त्रायस्वास्मादभीशापात् सत्येन भव मेऽमृतमिति ॥

( याज्ञ. २–११० )

तत्र प्राङ्मुख उदङ्मुखो वा ब्रह्मणो दक्षिणामुखाय(?) देवब्राह्मणसन्निधौ पूर्वं महेश्वरपूजां विशिष्टषोडशोपचारैः कृत्वा विषं भक्षयेत् । ततः पंचतालशतकालं परीक्षयेत् । तावन्मध्ये यदा निर्विकारः तदा शुद्धः स्यात् । य(त)दाह—

भक्षिते तु यदा स्वस्थो मूर्च्छाच्छर्दिविवर्जितः ।

निर्विकारो दिनस्यान्ते शुद्धं तमपि निर्दिशेत् ॥ इति,

[त]च्चतुर्मात्राविषयम् । तदाह नारदः(१)—

दद्याद्विषं सोपवासो देवब्राह्मणसन्निधौ ।

धूपोपहारमंत्रैश्च पूजयित्वा महेश्वरम् ॥

द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते ।

उदङ्मुखः प्राङ्मुखो वा विषं दद्यात्समाहितः ॥

एतद्विभागमे देयं न मध्याह्ने नापराह्णे न संध्यायां च । शरद्ग्रीष्मवसंतवर्षासु न देयम् ।

---

( १ ) ना. स्मृ. नोपलभ्यते इदं श्लोकद्वयम् । अत्रानुपयुक्तं च । किन्तु 'यदाहे'त्यस्योपरि—'पञ्चतालशतं कालं निर्विकारो भवेद्यदा । तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सतम्' इति मयूखे नारदीयत्वेन धृतं वचनमुपयुज्यते ।

वारिजान्यतिजीर्णानि कृत्रिमाणि तथैव च ।

भूमिजानि च सर्वाणि विषाणि परिवर्जयेत् ॥

वर्षासु षड्यवा मात्रा ग्रीष्मे पंचयवा स्मृता ।

हेमन्ते वा पंचयवा शरदि स्यां(?)ततोपि हीति(१) ।

विषं च घृतप्लुतं देयम् ।

घृतेन योजितं श्लक्ष्णं पिष्टी(२) त्रिंश*(३)द्गुणान्वितमिति ।

देयं शीतल(?)पूर्वाह्णे च (४)दीयमानं विषं करे शोधनीयम् ।

विधिवृत्तं विषं येन जीर्णं मंत्रौषधीर्विना ।

शुद्धोन्यथा.....................?(५)

इति विषविधिः ॥

---

(१) 'हेमन्ते सप्त वाष्टौ वा शरद्यस्यापि नेष्यते' इति ना. स्मृ. ( ऋ. ३२४ ) वचनम् । मयूखे-'हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि ही'ति पठित्वा अल्पा = त्रियवेति व्याख्यातम् ।

(२) पिष्टं त्रिंशदिति वी. मित्रोदयादौ ।

(३) **( ९२ पृ० अधस्तनपङ्क्तितः प्रारभ्य ) चिह्नगतो ग्रन्थः 'ख' पुस्तके नास्ति ।

(४) पूर्वाह्णे शीतले देशे विषं देयमित्यर्थोऽत्र विवक्षितः, 'पूर्वाह्णे शीतले देशे विषं देयं तु देहिना'मिति कात्यायनस्मरणात् ।

(५) विधिदत्तं विषं येन जीर्णं मन्त्रौषधैर्विना ।

स शुद्धः स्यादन्यथा तु दण्ड्यो दाप्यश्च तद्धनम् ॥ इति वी० मित्रोदयादौ ।

## अथ कोषविधिः ।

सर्वदिव्यसाधारणविध्यन्तधर्मावाहनादिसकलदेवतापूजाहोमसमंत्रकप्रतिज्ञापत्रशिरोनिवेशनांतेषु सत्सु उग्रान् देवान् आदित्यदुर्गाक्षेत्रपालमल्लारिप्रमुखान् समभ्यर्च्य गंधपुष्पाक्षतादिभिः संपूज्य तत्स्नानोदकमाहृत्य प्रसृतित्रयं पूर्वाह्णे कृतोपवासः कृतस्नाताचमनः आर्द्रवासा गोमयेन मण्डलं कृत्वा आदित्याभिमुखं शोध्यं पाययेत् । अर्वाक् चतुर्दशादह्नो यस्य देवराजकृतं व्यसनं न स्यात्स शुद्धः । अन्यथाऽशुद्ध इति । द्विरात्रत्रिरात्रसप्तरात्रद्वादशरात्रप्रभृतयोऽवधिकाला वा । तदाह नारदः—

पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च ।
सशूकस्य व्यसनिनः कोशपानं विधीयते ॥

(ना. स्मृ. ऋ. ३२८)

सशूकः=दिव्यकरणेऽतिशंकावान्(१) ।

भक्तो यो यस्य देवस्य पाययेत्तस्य तं नरम् (२) ।
समभावे तु देवानामादित्यस्य च पाययेदिति ॥

---

## अथ तण्डुलविधिः ।

शालेयान् तंडुलान् शुक्लान् कृत्वा मृन्मयपात्रे आदित्यस्याग्रे संस्थाप्य रात्रौ तत्रैवाधिवास्य प्रातरादित्याभिमुखस्य तंडुलान्

---

(१) सशूक आस्तिक इति प. मा. ।

(२) तस्य तज्जलमिति प. माधवादौ ॥

भक्षयित्वा निष्ठीवने यदि शुक्लतंडुलाः तदा शुद्धो यदि रक्तास्तदाऽशुद्ध इति निर्णयः ।

पितामहः—

तंडुलानां प्रवक्ष्यामि विधिं भक्षणवर्जने ।
शूद्रे(१) तु तंडुला देया नान्यत्रेति विनिश्चयः ॥
तंडुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्य चित् ।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥

तत्रैव रात्रौ—

प्रभाते कारिणो(२) देया आदित्याभिमुखस्य तु ।
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीयते दिवा ॥
भूर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य च ।
शुद्धःस्याच्छुक्लनिष्ठीवे रक्तमिश्रे च दोषभाक् ॥
शोणितं दृश्यते यस्य हनुस्तालु च सीदति ।
गात्रं च कंपते यस्य तमशुद्धं विनिर्दिशेत् ॥

इति तण्डुलविधिः ।

---

## अथ तप्तमाषविधिः ।

सौवर्णं राजतं ताम्रमायसं वा षोडशांगुलं चतुरङ्गुलविस्तारं वर्तुलं पात्रं विधाय घृततैलयोः पलविंशत्या पूरयित्वा तत्तैलघृतं

---

(१) चौर्ये तु इति व्य. म. वी० मित्रोदयादौ ।

(२) कारी=शोध्यः ।

सुतप्तं कृत्वा तस्मिन्सुवर्णमाषकं निक्षिप्य तमंगुष्ठांगुलियोगेनोद्धरेत् । यः शरीरं न कम्पयते यत्करे स्फोटो वा न जायते स शुद्धः । अथवा पूर्वोक्तसौवर्णादिपात्रे गव्यं घृतमादाय तदग्नौ सन्ताप्य तत्र सौवर्णीं राजतीं ताम्रीमायसीं मृन्मयीं वा मुद्रिकां निक्षिप्य तामत्यन्तं सुतप्तां कृत्वा—

परं पवित्रममृतं घृत त्वं य[ज्ञक]र्म सु ।
दह पावक पापं त्वं हिमशीतं शुचौ भव ॥

[इति]स्नात्वा आर्द्रं वासः परिधाय आमन्त्रणं कृत्वा धर्माद्यावाहनादि शिरसि पत्रधारणपर्यन्तं सर्वं पूर्वोक्तं कृत्वा प्रदेशिन्या तां मुद्रिकामुद्धरेत् । [यदि प्र]देशिन्यां न स्फोटकास्तदा शुद्धिरन्यथाऽशुद्धिरिति तत्त्वम् । तदाह पितामहः—ग्रन्थान्तरे(१)—

कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ।
चतुरङ्गुलकं वापि मृन्मयं वापि मण्डलम् ॥

मण्डलं वर्त्तुलमिति यावत् ।

पूरयेद् घृततैलाभ्यां विंशत्या वै पलैस्तु तत् ।
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥
सुवर्णमाषकं तस्मिन् सुतप्तं निक्षिपेत्ततः ।
अङ्गुष्ठाङ्गुलियोगेनोद्धरेत्तप्तमाषकम्(१) ॥
कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः ॥

तर्जन्यंगुष्ठमध्यमानां समूहेनेति यावत् । अथवा—

सौवर्णीं राजतीं ताम्रीमायसीं वा विशोधिताम् ।
सलिलेन सकृद्धौतां [प्रक्षि]पेत्तत्र मुद्रिकाम् ॥

प्राड्विवाकः सर्वं पूर्वोक्तं कर्म कुर्यात् ।

उपोषितमतः स्नातमार्द्रवासःसमन्वितम् ।
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ।
यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः ॥ इति ।

इति तप्तमाषविधिः ।

---

## अथ फालविधिः ।

तत्र गुरुः—

आयसं द्वादशफलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तरम् ॥
अग्निवर्णं तु तच्चौरो जिह्वया लेलिहेत्सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥ इति ।

अत्रापि धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं कर्त्तव्यम् ।

इति फालविधिः ।

---

## अथ धर्मजविधिः ।

तदाह पितामहः—

अधुना सम्प्रवक्ष्यामि धर्माधर्मपरीक्षणम् ।
राजतं कारयेद्धर्ममधर्मं सीसकायसम् ॥
लिखेत भूर्जपत्रे[वा] धर्माधर्मौ सितासितौ ।

अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ।
सितपुष्पधरो धर्मोऽधर्मोऽसितपुष्पधृक् ॥
एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् ।
गोमयेन मृदा वापि पिण्डौ कार्यौ समन्ततः ॥
मृद्भाण्डकेऽनुपहते स्नाप्यौ चानुपलक्षितौ ।
उपलिप्तौ शुचौ देशे देवब्राह्मणसन्निधौ ॥
आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् ।
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ॥
यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे ।
अभियुक्तस्ततश्चैवं प्रगृह्णीयात्तु लम्बितः(१) ॥
धर्मे गृहीते शुद्धिः स्यादधर्मे तु स हीयते ।
एवं सामान्यतः प्रोक्तं धर्माधर्मपरीक्षणम् ॥

एतानि दिव्यानि । अन्ये शपथाः द्रव्याल्पत्वमहत्त्वविषयजातिविशेषविषयाः मनुना उक्ताः ।

निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् ।
त्रिकादर्वाक्....? पुष्पं स्यात्कोशपानमतः [ परम् ] ॥

अत्र कालनियमस्त्रिरात्रप्रभृतिः । कार्यगौरवलाघवाभ्यां दण्डमाह—

विषे तोये हुताशे च तुलाकोशे च तण्डुले ।
तप्तमाषादिदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥

सहस्रषट्पंचशतं चतुःशतं त्रिशतमेकशतं च तारतम्येनेति ॥

---

( १ ) 'अभियुक्तस्ततश्चैकं प्रगृह्णीताविलम्बित' इति व्य. म. पा.

## अथ चतुर्थचरणो निर्णयविषयः ।

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुःप्रकारोऽभिहितः सन्दिग्धार्थविनिर्णयः ॥
एकैको द्विविधः प्रोक्तः क्रियाभेदान्मनीषिभिः ।
अपराधानुरूपं च दण्डं च परिकल्पयेत् ॥
प्रतिवादी प्रपद्येत यद्धर्मस्य विनिर्णयः(?) ।
द्रव्यैर्विशोधितः सम्यक् निर्णयः समुदाहृतः ॥
प्रमाणैर्निश्चितो यस्तु व्यवहारः स उच्यते ।
वाक्च्छलानुत्तरत्वेन द्वितीयः परिकीर्तितः ॥
अनुमानेन निर्णीते चरित्रमिति कथ्यते ।
देशस्थित्या तृतीयस्तु शास्त्रविद्भिरुदाहृतः ॥
प्रमाणसमतायां तु राजाज्ञा निर्णयः स्मृतः ।
शास्त्रसभ्याविरोधेन चतुर्थः परिकीर्तितः ॥

संग्रहकारिकायाम्—

उक्तप्रमाणरूपेण स्वमतस्थापिता क्रिया ।
राज्ञा परीक्ष्य सभ्यैश्च स्थाप्यौ जयपराजयौ ॥
यो यथोक्त्या प्रथमया क्रिययार्थं प्रसाधयेत् ।
भाषान्तरसमं साध्यं स जयी परिकीर्तितः ॥
असाध्यं साधयित्वाऽपि विपरीतार्थमात्मनः ।
दृष्टकारणदोषो वा यः पुनः स पराजयी ॥ इति ।

न्यासः—

निर्जितं दण्डयेद्राजा जेतुः पूजां प्रवर्त्तयेत् ।

पूर्वोत्तरमाह कात्यायनः—

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः ॥
मध्यस्थस्थापितं द्रव्यं चलं वा यदि वा स्थिरम् ।
पश्चात्तत्सोदयं दाप्यं जयिने पत्रमुत्तरम् ॥

तदुक्तं गुरुणा—

पूर्वोत्तरक्रियायुक्तं निर्मथ्योक्तं यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥

धनदाने तु विशेषः—

राजा तु स्वामिने वित्तं(प्रं)स्वत्वैनैव प्रदापयेत् ।
देशाचारेण चान्यांस्तु दु(इ)ष्टान्संपीड्य दापयेत् ।
रिक्थिनः सुहृदं वापि छलेनैव प्रदापयेत् ॥

स्वयं च दण्डो ग्राह्यः । तदाह नारदः—

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद् गृहीत्वांशं तु विंशक(१)म् ॥

( ना. स्मृ. ऋ. १३२ )

तथा च बृहस्पतिः—

केवलं शास्त्रमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयः धर्मस्तेनापहीयते ॥

एतदविप्रतिपन्नऋणिकविषयम् । विप्रतिपन्नऋणिकविषये विशेषः—'उत्तमर्णश्चेद्राजानमियात्तर्हि राज्ञे धनदशभागसमं दण्डं

(१) 'पञ्चकं शतम्' इति ना. स्मृ. पा.

दद्यात् । समर्थश्चेदुत्तमर्णो विंशतितममंशम्' इति । उत्तमर्णेन धनपादोनं भूतिं दण्डं दत्त्वान्यतमप्रकारेण यदा राज्ञः प्रियोऽधमर्णः प्रलापबुध्या राज्ञे पूर्वं निवेदयति तदा राज्ञा तद्धनं दातव्यः । द्विगुणादमविधायिमनुवचस्तु उद्धृतोत्तमर्णाधमर्णविषयम् । राज्ञे समधनदानविधायियोगिवचनं तु द्विगुणदण्डपर्याप्तधनाभावविषयम् । मिथ्याभियोगिनस्तु अपर्याप्तधनस्यापि तत्समं दण्डः, पर्याप्तधनस्य द्विगुणो दण्डः,

मिथ्याभियोगी द्विगुणमभियोगाद्धनं हरेत् ।

(या. स्मृ. २—११)

इति स्मरणात्। धनाभावेऽप्यानृण्यं कर्मणा गच्छेदित्यनुकल्पः कल्पनीयः । यः प्रथमतो निह्नवं कृत्वा पश्चात्सम्प्रतिपद्यते तस्यार्द्धो दण्डः,

निन्हुते तु यदा वादी स्वयं तु प्रतिपद्यते ।
ज्ञेया सा प्रतिपत्तिश्च तस्यार्द्धं विनयः स्मृतः ॥

इति स्मरणात् । यदार्थिना अनेकसुवर्णरजतवस्त्रादिकं प्रतिज्ञाकाले निश्चितमभियुक्तं प्रत्यर्थी यदि सर्वमेवैतन्मिथ्येति प्रतिजानीते तदार्थिना एकदेशभूतहिरण्यविषये प्रतिवाद्यादिभिरङ्गीकारितस्तदा सर्वं पूर्वलिखितं राज्ञा दण्डयः,

अनेकार्थाभियुक्तेन सर्वार्थव्य(म)पलापिनम् ।
विभावितैकदेशेन देयं यदभियुज्य(तुष्ट)ते ॥

इति नारदस्मृतेः(१) ।

---

(१) ना. स्मृ. नोपलब्धमिदम् ।

अनेकार्थाभियोगे तु यावत्साधयते धनम् ।

साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥

इति योगि(१)वचनं तु पुत्रादिदेयपित्राद्यृणविषयम् । नतु एकदेशविभागन्यायस्य तत्र प्रवृत्तिः । दिव्यजयपराजयावधारणाद्दण्डविशेषाः कात्यायनेन दर्शिताः 'शतार्धं दापयेच्छुद्ध' इति । विषतोयहुताशकोशतंडुलतप्तमाषफालेषु च सहस्रषट्शतपञ्चचतुस्त्रिद्व्येकैकशतानि कल्पनीयानि । सपणविवादे 'सपणश्चेद्विवादः स्या'दिति योगिवचनान्निर्णयविशेषः ।

नारदोऽपि—

विवादे सोत्तरपणे द्वयोर्यस्तत्र हीयते ।

स पणं स्वकृतं दाप्यो निर्णयं च पराजये ॥ इति(२) ।

उक्तस्तु दण्डो द्विविधः—शारीरः अर्थदंडश्च । ताडनप्रभृतिमरणांतःशारीरः। काकिण्यादिसर्वस्वान्तः अर्थदण्डः। शारी[रो द]शधा । अर्थदण्डोऽनेकधा । उपस्थोदरजिह्वाहस्तपरण(?)नेत्रनासिकाकर्णशिरोदेहस्थाने....? शिरसो मुण्डनं दण्डः । तदाह—

शारीरश्चार्थदण्डश्च दण्डस्तु द्वि(वि)विधः स्मृतः ।

शारीरस्ताडनादिस्तु मरणान्त[ःप्रकीर्ति]तः ॥

कङ्कणादि(३)स्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ।

---

(१) नेदं योगियाज्ञवल्क्यवचनमपि तु कात्यायनीयत्वेन मिताक्षरायामुदाहृतम् । 'संसाधयेद्धनी' इति तु तत्र पाठः ।

(२) ना. स्मृ. नोपलब्धम् ।

(३) काकिण्यादिस्त्विति ना. स्मृ. पा. ।

शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा ॥

( ना॰ स्मृ॰ परिशिष्टे ५३–५५) इति ।

अन्ये तु शारीरस्य चातुर्विध्यमाचक्षते–

शिरसो मुण्डनं दण्डस्तथा निर्वासनं पुरात् ।

ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च ॥

( ना॰ स्मृ॰ साहसम॰ १० )

इति स्मरणात् । योगिनस्तु दण्डस्य चातुर्विध्यमाहुः––वाग्दण्डो धिग्दंडो धनदण्डो वधदण्डश्चेति । वाग्दण्डः परुषवचनात्मकः । धिग्दण्डः कुत्सनम् । एते चत्वारः क्रमिकाः पातकिनः व्यस्ताः समस्ता वा । अथ चैवं व्यवस्था पुरुषतारतम्येन । गुरुपुरोहितपूज्यमित्रादिषु वाग्दण्डः, वादिनोऽर्थदण्डः, तथा मातृपित्रादिषु वाग्दण्ड एव । मातृपितृविषये दण्डाभाव एव वा युक्तः । मनु–बृहस्पतिभ्यामुक्तं मात्रादिषु दण्डविधानं शारीरार्थदण्डव्यतिरिक्तविषयम्,

गुरून् पुरोहितान् पूज्यान् वाग्दण्डेनैव दण्डयेत् ।

इति स्मरणात् । ब्राह्मणस्य नैव वधो दण्डः ।

[यत्तु–] चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम् ।

शारीरं वध(१)संयुक्तं धर्म्यं दंडं प्रकल्पयेदिति ॥

तथा गौतमेन—“[न]शारीरो ब्राह्मणस्य दंड” इत्यभिहितम्, तदङ्गभङ्गदण्डरूपनिषेधार्थम् ।

---

( १ ) धनेति प. मा. ।

न त्वं(यत्वं)गभङ्गं विप्रस्य प्रवदंति मनीषिणः ।

इति हारीतस्मरणात् । तथा कात्यायनः—

धनदानासमं बुद्ध्वा स्वाधीनं कर्म कारयेत् ।
अशक्तौ बन्धनागारप्रवेशो ब्राह्मणादृते ॥ इति ।
स्त्रीबालोन्मत्तवृद्धानां दरिद्राणां च रोगिणाम् ।

इत्यादिना ।

ब्राह्मणस्य वधस्थाने मौण्डयं[दण्डो] विधीयते ।
इतरेषां तु वर्णानां दंडः प्राणांतिको भवेत् ।
तस्मादस्य वधं राजा मनसापि न चिन्तयेदिति ॥

गुरुः—

ललाटांकं ब्राह्मणस्य नान्यो दंडो विधीयते ।
महापातकयुक्तोऽपि न विप्रो दंडमर्हति ॥ इति ।

नारदस्तु विहितस्यार्धं दण्डमाह—

अयुक्तं साहसं कृत्वा प्रत्यापत्तिं व्रजेत्तु यः ।
ब्रूयात्सर्वं वा सदसि तस्य वार्धो दमः स्मृत इति ॥

वर्णविशेषेण दण्डतारतम्यम् ।

येन दोषेण शूद्रस्य दंडो भवति धर्मतः ।
न चैतत्क्षत्रविप्राणां द्विगुणो द्विगुणो भवेत् ॥
प्रव्रज्यावसितं शूद्रं जपहोमपरायणम् ।
वधेन गमयेत्पापं दंडोऽपि द्विगुणं दमम् ॥

दंडानां पारिभाषिकसञ्ज्ञा मनुना दर्शिता—

पणानां द्विशते सार्धे प्रथमः साहसः स्मृतः ।

मध्यमःपञ्चमो ज्ञेयः सहस्रञ्चैव चोत्तमः ।

( मनु॰ ८–१३८ ) इति ।

इयं संज्ञा प्रथमापराधविषयेऽनुसर्त्तव्या ।

अपराधावृत्तौ योगी आह—

साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।

तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ॥

( याज्ञ॰ १–३६६ ) इति ।

पणशब्देनात्र क[ार्षा]पणो गृह्यते । यथोक्तमार्गेण व्यवहारमकुर्वतोऽमात्यादीन्दण्डयित्वा पुनर्व्यवहारं प्रवर्त्तयेत् । सभ्यानां दंडवत् जयिनोऽपि दंडः । साक्षिदोषेण व्यवहारान्यथात्वे साक्षिणो दंडः । एवं शास्त्रोक्तमार्गेण निर्णयं कुर्वतो राज्ञः फलं दर्शयति गुरुः—

एवं शास्त्रोदितं राजा कुर्वन् निर्णयपालनम् ।

वित[त्येह] यशो लोके महेन्द्रसदृशो भवेदिति ॥

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।

भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः ॥

श्रीमद्वल्लभसूनुरात्मनिरतः सत्संप्रदायाग्रणीः ।

सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥

निजामसाह साम्राज्यधुरन्धरमहीपतिः ।

श्री नृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरंधरश्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे

व्यवहारसारे दिव्यप्रकरणम् ॥

## अथाष्टादशपदेषु प्रथममृणादाननिर्णयः।

निर्णयलक्षणं पराशरेणोक्तम्—

प्रमाणैर्हेतुरचितैः शपथेन नृपाज्ञया।
वादिसम्प्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः॥

तत्र प्रमाणं लिखितं साक्षिणो भुक्तिश्चेति। अनुमानं तर्कश्च हेतुः, देशस्थितिः पूर्वकृताचरितं सत्यघटादयः शपथाः अर्थानुरूपाः, सर्वाभावे राजाज्ञया निर्णयः। तथाहि—

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्।
अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः॥
देशस्थितिः पूर्वकृताचरितं समुदाहृतम्।
अर्थानुरूपाः शपथाः स्मृताः सत्यघटादयः॥
तेषामभावे राजाज्ञा निर्णयं तं विदुर्बुधाः॥ इति।

व्यासः—

जेतुः प्रवर्तते पूजा गन्धमाल्याम्बरादिना।

ततः कृत्यमाह कात्यायनः—

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम्।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः॥

जयपत्रलक्षणं बृहस्पतिना उक्तम्—

पूर्वोत्तरक्रियायुक्तं निर्णयं (र्णीतं) तं यदा नृपः।
प्रदद्याज्जयिनो लेख्यं जयपत्रं तदुच्यते॥ इति।

तत्र प्रमाणादिलक्षणमुक्तं वक्ष्यते च। तत्र ऋणादानं वि-

वादपदं विवादकारणम् । तत्र ऋणस्य आदानमृणादानम् । तत्रोत्तमर्णाधमर्णयोरुत्तमर्णस्याभ्यर्हितत्वात्तत्कर्तृकदानादानयोरपि अभ्यर्हितत्वादितरेषां च तत्पूर्वकत्वादार्थक्रमेण पाठक्रमबाधाया युक्तत्वाच्च पूर्वं दानादानेऽभिधीयेते ।

स्थानलाभनिमित्तं हि दानग्रहणम् । तदुक्तम्—

स्थानलाभनिमित्तं हि दानग्रहणमिष्यते ।
सवृद्धिन(?)स्यकस्येति दानं ग्रहणमिष्यते ॥ इति ।

इदं दानग्रहणं कुसीदमित्यभिधीयते । तत्र बृहस्पतिः—

परिपूर्णं गृहीत्वाऽपि बन्धं वा साधुलग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥

सवृद्धिकमूलद्रव्यपर्याप्तता हि आधिपरिपूर्णता । ततश्च वित्तविवर्धनी वृद्धिर्ग्राह्या । सा च धर्म्या सम्बन्धके विश्वासार्थमाधौ स्थापिते प्रतिमासमशीतितमो भागःस्यात् । ततश्चैकशतस्य प्रयुक्तस्य अशीतिभागवृद्ध्या वृद्धिः । अत्र आध्यभावे ब्राह्मणक्षत्रियवैश्यशूद्राणां यथाक्रमं द्विकं त्रिकं चतुष्कं पञ्चकं वा वृद्धिर्भवति । तदाहुः मानवाः—

विशिष्टां विहितां वृद्धिं विसृजेद्वित्तवर्धनीम् ।
अशीतिभागं गृह्णीयाच्छते मासस्य वार्धुषीति ॥

तथा योगी—

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छते द्वित्रिचतुःपञ्चकमन्यथा ॥

( याज्ञ. २–३७ ) इति ।

तथा—

द्विकं त्रिकं चतुष्कं [च] पञ्चकं च धनं स्मृतम् ।
मासस्य वृद्धिं गृह्णीयात् वर्णानामनुपूर्वशः ॥

( मनु. ८–१४२ )

द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी ।

( मनु. ८–१४१ )

साधम(?)वृद्धिश्चतुर्विधा पञ्चधा षोढा चेति । तत्र चतुर्धा तावत्–कालिका कारिता कायिका चक्रवृद्धिश्च । तत्र प्रतिमासवृद्धिः स्राविणी वृद्धिः फलदा कालिका । अपात्रभूतऋणिकेनैव स्वमुखेन स्वयं कृता कारिता ।

कायाविरोधिनी शश्वत् पणपादादिकारिका ।
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति ॥

अहन्यहनि दीयमाना वृद्धिः कायिका । प्रतिमासं दीयमाना कालिका । असमर्थेन स्वयं कल्पिता कारितेत्यर्थः ।

तथा बृहस्पतिः—

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधाऽन्यैः प्रकीर्तिता ।
षड्विधाऽन्यैः समाख्याता तत्त्वतस्तां निबोधयेति ॥

ग्रहीतृभेदेन परिमाणान्तरभेदः—

कान्तारगास्तु दशकं सामुद्रा विशकं शतम्(१) ।

---

( १ ) अस्योत्तरार्धस्तु–'दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ( याज्ञ. २–४१ ) इति ।

कात्यायनः—

कृत्वोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥

कृत्वोद्धारमादायेत्यर्थः ।

पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात् ....मौल्यं वृद्धिमाप्नुयात् ॥
निक्षेपं वृद्धिशेषं च क्रयविक्रयमेव च ।
याच्यमानं न चेद्दद्याद्वर्धते पञ्चकं शतम् ॥
प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम् ।
याच्यमानं न दत्तं चेद्वर्धते पञ्चकं शतम् ॥
यो याचितकमादाय तमदत्त्वा दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात् तद्धनं वृद्धिमाप्नुयात् ॥
स्वदेशस्थोऽपि वा यस्तु न दद्याद्याचितः सकृत् ।
स सर्वकारितां वृद्धिमनिच्छन्नपि दापयेत् ॥
न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्द्धात्तु वर्धते ॥
प्रीतिदत्तं तु यत्किंचित्तन्न वर्धेदयाचितम् ।
याच्यमानमयाच्यस्तु वर्धयेत्पञ्चकं शतम् ॥

याचनकालादारभ्य वृद्धिं राजा दापयेदित्यर्थः । अनाकारि-

तवृद्धेरपवादमाह नारदः—

पण्यमूल्यं भृतिर्न्यासो दण्डो यस्य प्रकल्पितः ।

वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः ॥

( ना. स्मृ. ऋ. ३६ )

योगी—

सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा ।

वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥

( याज्ञ. २–३१ ) इति ।

पोषणासमर्थस्य तत् पुष्टिसन्ततिकामस्य प्रयोगा(?)क्षीरपरिचर्यार्थिनः(१) ।

तत्र पशूनां स्त्रीणां च सन्ततिरेव वृद्धिः । रसस्य तैलघृतादेर्वृद्धिग्रहणमन्तरेण चिरकालावस्थितस्य स्वकृतया वृद्ध्यावर्धमानस्याष्टगुणा वृद्धिः । संवर्त्तः—

न वृद्धिः स्त्रीधने लाभे निक्षिप्ते च यथास्थिते ।

सन्दिग्धे प्रीतिभावे च यदि न स्यात्स्वयंकृताः ।

लाभो वृद्धिः । कृतवृध्यपवादो याज्ञवल्क्येन दर्शितः—

दीयमानं न गृह्णाति प्रयुक्तं यत्स्वकंधनम्(२) ।

मध्यस्थस्थापितं चेत् स्यात्(३) वर्धते न ततः परम् ॥

( याज्ञ. २–४४ )

पुष्पमूलफलानि च तुलाधृतमष्टगुणमिति । वासिष्ठेन रसस्य

---

( १ ) प्रयोगः सम्भवति । ग्रहणं च क्षीरपरिचर्यार्थिनः इति मि. ( २–२९ )

( २ ) यत्स्वबन्धनमिति 'क' 'ख.' पा. ।

( ३ ) तत्स्यादिति 'क'. 'ख'. पा०

द्वैगुण्यमुक्तं—"द्विगुणं हिरण्यं त्रिगुणं धान्यं रसा अपि त्रिगुणा" इति । फलादीनामष्टगुणत्वं मनुना धान्यस्य पुष्पमूलफलादीनां च पञ्चगुणत्वमेवोक्तम् ।

धान्ये शदे लवे वाह्ये नातिक्रामति पंचताम् ।

( मनु॰ ८–१५१ ) इति ।

शदः क्षेत्रफलपुष्पादि । लवो मेषोर्णा च मरीचकेशादि । वाह्यो बलीवर्दतुरगादिः । तत्राधमर्णायोग्यतावशेन दुर्भिक्षादिकालवशेन [च] व्यवस्था । एतत्सकृत्प्रयोगसकृदाहरणयोः । पुरुषान्तरसंक्रमणेन प्रयोगान्तरकरणे तस्मिन्नेव वा एकस्यैकप्रयोगीकरणे सौवर्ज्यांतर्यादिकं(१) द्वैगुण्याद्यतिक्रम्य पूर्ववद्वर्द्धते । सकृत्प्रयोगेऽपि प्रतिदिनं प्रतिमासं [ प्रति ] वत्सरं वा वृद्ध्याहरणे अधमर्णादेयस्य द्वैगुण्यासम्भवात् पूर्वाहृतवृध्या सह द्वैगुण्यमतिक्रम्य वर्धतएव । तदुक्तं मनुना—"कुसीदवृद्धिर्द्वैगुण्य"[मिति] । उपचयार्थप्रयुक्तं द्रव्यं कुसीदम् । तस्य वृद्धिः कुसीदवृद्धिः द्वैगुण्यं नात्येति नातिक्रामति ।

(१)धान्ये चतुर्गुणा प्रोक्ता दश वाह्यलवेषु च ।
उक्ता पञ्चगुणा शाके बीजादौ षड्गुणा स्मृता ॥
लवणे स्नेहमद्येषु वृद्धिरष्टगुणा मता ।
गुडे मधुनि चैवोक्ता प्रभुक्ते चिरकालिकी ॥

---

( १ ) अत्र 'हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके' इत्यर्धो न्यूनः, अग्रे कुप्यपदार्थनिर्वचनात् ।

कुप्यं त्रपु सीसकम्। देशभेदेनापि नारदः परां वृद्धिमाह—

द्विगुणं त्रिगुणं चैव तथान्यस्मिंश्चतुर्गुणम्।
तथाष्टगुणमन्यस्मिन् देयं देशेऽवतिष्ठति॥

(ना. स्मृ. ऋ. १०६)

देयमृणं वर्धमानं चिरकालावस्थितं क्वचिद्देशे द्विगुणं-त्रिगुणं-चतुर्गुणमष्टगुणं भवतीत्यर्थः। वसिष्ठः—

वज्रशुक्तिप्रवालानां हेम्नश्च रजतस्य च।
द्विगुणा दीयते वृद्धिः कृता कालानुसारिणी॥
ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च।
त्रिगुणा तिष्ठते वृद्धिः कालान्तरकृतस्य च॥

शुक्तिरिति मुक्ताफलं लभ्यते वज्रसाहचर्यात्। व्यासः—

शा(सी)ककार्पासबीजेषु षड्गुणा परिकीर्तिता।
[व]दन्त्यष्टगुणान् काले म[द्य]स्नेहरसा[सवा]न्॥

तथा कात्यायनः—

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम्।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य चेति॥

यत्र वृद्धिविशेषो न श्रूयते तत्र द्विगुणैव वृद्धिर्ज्ञेया। तथा विष्णुः प्राह—"अनुक्तानां द्विगुणे"ति। ग्रहणधर्मे विशेषो योगिनोक्तः—

प्रपन्नं साधयन्नर्थं न वाच्यो(विषं) नृपतेर्भवेत्।
साध्यमानो नृपं गच्छेद्दण्ड्यो दाप्यश्च तद्धनम्॥

(याज्ञ. २-४२)

धर्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥

( मनु. ८–४९ )

धर्मेण प्रीतियुक्तवचनेन, व्यवहारेण साक्ष्यादिना छ (फ)लेन उत्सवादिना (जेन?)आचरितेनाभोजनेन पञ्चमेन बलेन निगडबन्धेन । कात्यायनः—

पीडयेद्यो धनी कश्चिदृणिनं न्यायवादिनम् ।
तस्मादर्थात्स हीयेत तत्समं चाप्नुयाद्दममिति ॥

अथ दापनप्रकारः ।

राजा तु स्वामिने विप्रसाध्येणैव प्रदापयेत् ।
देशाचारेण चान्यांस्तु दुष्टान्सम्पीड्य दापयेत् ॥
रिक्थिनं सुहृदं वापि फलेनैव प्रदापयेत् ।

नचैकवारमेवानेके उत्तमर्णाः एकोऽधमर्णः, तत्र कथं राज्ञा दाप्यः केन वा क्रमेण दाप्यइत्यपेक्षायामाह योगी—

गृहीतानुक्रमाद्दाप्यो (१)धनिनामधमर्णिकः ।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम्(२) ॥

( याज्ञ. २–४३ )

सजातीयधनिकेषु यथाक्रमं, विजातीयेषु ब्राह्मणादिक्रमेणेति । यदा तु उत्तमर्णो दुर्बलः प्रबलश्चाधमर्णः, तत्र व्यवस्था—

---

( १ ) दद्यादिति याज्ञ० पा० ।

( २ ) दद्यात्तु ब्राह्मणायाग्रे नृपायेति या. पा. ।

राज्ञाधमर्णिको दाप्यः साधिताद्दशमं शतम् ।
पञ्चकं तु शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥

अयमर्थः—अधमर्णात् राज्ञा साधितार्थाद्दशमोंऽशो दण्डरूपेण ग्राह्यः । उत्तमर्णाद्विंशतितमो भागः साधितार्थाद् ग्राह्यः । अथ दुर्बलेऽधमर्णे व्यवस्था—

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥

ब्राह्मणजातिरुत्तमर्णः क्षत्रियादिजातिमधमर्णं परिक्षीणं निर्धनमृणनिवृत्त्यर्थं स्वजात्यनुरूपं कारयेत् । तत्कुटुम्बाविरामे ब्राह्मणश्चेन्निर्धनः शनैरेव दाप्यः । हीनजातिग्रहणं सजातेरुपलक्षणम् । अतः समानजातीयमपि परिक्षीणं यथोचितं कर्म कारयेत् । ब्राह्मणग्रहणं श्रेष्ठजातेरुपलक्षणम् । अतः क्षत्रियादिरपि क्षीणो वैश्यादेः शनैः शनैः दाप्यो यथोदयम् । तदाह मनुः—

कर्मणापि समं कुर्याद्धनिकेना(१)धमर्णिकः ।
समोव(पि)कृष्टजातिस्तु दद्याच्छ्रेयांस्तु तच्छनैः ॥

( मनु. ८-१७७ ) इति ।

उत्तमर्णेन समं निवृत्तोत्तमर्णाधमर्णव्यपदेशेनात्मानमधमर्णः कर्मणा (र्माणि) कुर्यादित्यर्थः । अन्योऽपि विशेषः—

दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं(यं) धनम् ।

---

( १ ) धनिकायेति मनु. प. ।

मध्यस्थस्थापितं चे(त)त्स्याद्वर्धते न ततः परम् ॥

( याज्ञ. २–४४ ) इति ।

उपचर्यार्थप्रयुक्तं धनं यद्युत्तमर्णोऽधमर्णो[न] दीयमानमपि न गृह्णाति, तदा तद्धनमधमर्णेन मध्यस्थहस्ते स्थापनीयम् । ततस्तस्य न वृद्धिः । यदि स्थापितमपि याचितमुत्तमर्णेन न दद्यात् ततः पूर्ववद्वर्धत एवेति तात्पर्यार्थः ।

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्यात् गृहीत्वा द्विगुणं ततः ॥
ऋणिकस्य धनाभावे देयोऽन्योऽर्थस्तु तत्क्रमात् ।
धान्यं हिरण्यं लोहादि गोहिरण्यादिकं तथा ॥
रत्नं भूदासवर्गं च वाहनादि यथाक्रमात् ।
धनिकस्य तु विक्रीय प्रदेयं चानुपूर्वशः ॥
क्षेत्राभावे तथारामं तस्याभावे गृह(ऋण)क्रयः ।
द्विजातीनां गृहाभावे कालहारो विधीयते ॥ इति ।

मनुरपि—

ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम् ।
स दत्त्वा नियतां वृद्धिं करणं परिवर्तयेत् ॥

( मनु. ८–१५४ ) इति ।

अयं भावः—प्रतिदानकाले(दाने)धनासम्पत्तिवशात् मूलं धनं दातुमसमर्थः अधमर्णःऋणस्य चिरन्तनत्वपरिहारार्थं धनिकस्य सम्माननार्थं लेख्यरूपक्रियां पुनः कर्तुमिच्छेत् स निष्पन्नां वृद्धिं दत्त्वा क(धा)रणं परिवर्त्तयेत् । पुनर्लेख्यादिक्रियां वर्तमानसंवत्सरा-

दिचिह्नितां कुर्यात् । यो हि पूर्वनिर्जितां वृद्धिं दातुसमर्थः स तु तां वृद्धिं मूलत्वेनारोपयेत् । तदुक्तम्—

अदर्शयित्वा तत्रैव हिरण्यं परिवर्त्तयेत् ।
तावती च भवेद्वृद्धिस्तावतीं दातुमर्हति ॥

( मनु॰ ८—१५५ ) इति ।

हिरण्यमदर्शयित्वा निर्जितां वृद्धिमदत्त्वा तत्रैव लेख्ये परिवर्त्तयेत् । यस्तु ऋणप्रतिदानकाले सवृद्धिकं दातुं न शक्नोति तं प्रत्याह योगी—

लेख्यस्य पृष्ठे विलिखेद्दत्त्वा दत्त्वर्णिको(१)धनम् ॥

( याज्ञ॰ २—९३ ) इति ।

लेख्यासन्निधाने विष्णुः—"असमग्रदाने लेख्यासन्निधाने चोत्तमवर्णो लिखितं दद्यात् ।" नारदोऽपि—

गृहीत्वोपगतं दद्यादृणिकाले धनं धनी(२) ।
अदद्याद्याचमानस्तु शेषहानिमवाप्नुयात् ॥

( ना॰ स्मृ॰ ऋ॰ ११४ ) इति ।

धनप्रवेशमारभ्य यावल्लेखनं लेख्यदानं न करोति तावदधमर्णात्तादनं[३] वृद्धिमवाप्नुयात् । तथाच नारदः—

यदि वा नोपरि लिखेदृणिना चोदितोऽपि सन् ।

---

( १ ) तमृणिनो धनमिति 'क' 'ख' पा. ।
( २ ) ऋणिकायोदयं धनीति ना. स्मृ. पा. ।
( ३ ) तावन्नाधमर्णाद्वृद्धिमाप्नुयादिति प. मा. ।

धनिकस्यैव वर्धेत तथैव ऋणिकस्य तत्(१) ।

( ना. स्मृ. ऋ. ११५ ) इति ॥

यश्च ऋणाऽपकरणं न करोति स प्रत्यवायी स्यात् । तथा—

तपस्वी चाग्निहोत्री च ऋणवान म्रियते यदि ।

तपश्चैवाग्निहोत्रं च सर्वं तद्धनिनो धनम् ॥

( ना. स्मृ. ऋ. ६ ) इति ।

उद्धारादिकमादाय स्वामिने न ददाति यः ।

स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे ॥ इति ।

नारद आह—

याच्यमानं न दद्याद्यदृणं वार्धि प्रतिग्रहम् ।

तद्द्रव्यं वर्धते तावद्यावत्कोटिशतं भवेत् ॥

( ना. स्मृ. ऋ. ७ )

ततः कोटिशते पूर्णे वेष्टितस्तेन कर्मणा ।

अश्वः खरो वृषो भृत्यः पशुर्वा जायते गृहे इति ॥

प्रतिदातुः कर्त्तव्यमुच्यते—

दत्त्वर्णं पातयेल्लेख्यं शुद्धावन्यत्तु कारयेत् ।

साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ॥

( याज्ञ. २–९४ )

ससाक्षिकं पूर्वसाक्षिसमक्ष मेवदेयम् । नारदः—

लेख्यं दत्वा ऋणी शुध्येत्तदभावे प्रतीश्वरम् ।

---

( १ ) यदि नो लेखयेद्दत्तमृणिना चोदितोऽपि सन् ।
ऋणिकस्यापि वर्द्धेत यथैव धनिकस्य तत् ॥ इति ना. स्मृ. पा. ।

धनिकर्णिकयोरेवं शुद्धिः स्यात् समप्रतिश्रवमिति ॥[१]

( ना. स्मृ. ऋ. ११६ )

अथ देयमृणम्। स्वयंकृतं ऋणं स्वयमेव देयं पुत्रैर्वा देयमाह

नारदः—

इच्छन्ति पितरः पुत्रात् स्वार्थहेतोर्यतस्ततः।
उत्तमर्णाधमर्णाभ्यां मामयं मोचयिष्यति ॥

( ना. स्मृ. ऋ. ५ )

अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः।
ऋणात्पिता मोचनीयो यथा न नरकं व्रजेदिति ॥
अवाप्ते व्यवहारे तु पितर्युपरते क्वचित्।
काले तु विधिना देयं वसेयुर्नरकेऽन्यथेति ॥
विद्यमानेपि रोगार्ते स्वदेशात् प्रोषिते तथा।
विंशात्सम्वत्सराद्देयमृणं पितृकृतं सुतैः ॥
सान्निध्येऽपि पितुः पुत्रैः ऋणं देयं विभावितम्।
जात्यंधपतितोन्मत्तक्षयत्वग्दोषरोगिणः ॥ इति।

नारदः—

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः।
विभक्ता ह्यविभक्ता वा यो वा तामुद्वहेद् धुरम् ॥

( ना. स्मृ. ऋ. २ )

---

( १ ) लेख्यं दद्याद्धिशुद्धर्णो तदभावे प्रतिश्रयम्। धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परम् ॥ इति ना. स्मृ. पा.। प्रतिश्रयम् = विशुद्धिपत्रमिति ना. स्मृ. व्या.।

पितृकृतमृणं पुत्रा एव दद्युः । यदि विभक्तास्ततः स्वांशतो दद्युः । अविभक्ताश्चेत्सामान्यमेव दद्युः । तथाच बृहस्पतिः—

ऋणमात्मीयव(म)त्पित्र्यं पुत्रैर्देयं विभावितम् ।
पैतामहं समं देयमदेयं तत्सुतस्य तु । इति ॥

अत्र विभावितमित्यविशेषश्रवणात् (१)साक्षिग्रहणं समं वा यावद्गृहीतं तावदेव देयं न वृद्धिः । तत्सुतस्य प्रपौत्रादेरगृहीतधनस्य । तदाह कात्यायनः—

पित्र्यर्णे विद्यमाने तु न च पुत्रो धनं हरेत् ।
देयं तद्धनिके द्रव्यं मृते गृह्णन् हि दाप्यते ॥

तथाह बृहस्पतिः—

पित्र्यमेवाग्रतो देयं पश्चादात्मीयमेव च ।
तयोः पैतामहं पूर्वं देयमेतदृणं सदेति ॥

योगी—

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पित्र्यं(२) पौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥
( याज्ञ. २–५० ) इति ।

अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥
( याज्ञ. २–४५ )

---

( १ ) न वयं विद्म इति यत्र पुत्रैर्निह्नवः क्रियते तत्र साक्ष्यादिप्रमाणेन विभावितं चेद्देयमिति भावः।

( २ ) पुत्रेति याज्ञ० पा०।

अयमर्थः—[अ]विभक्तैर्बहुभिः कुटुम्बार्थमेकेन वा यद्दणं कृतं तत्कुटुम्बी दद्यात् । तस्मिन् प्रेते प्रोषिते वा एतद्रिक्थिनः सर्वेऽपि दद्युरिति । स एव विशेषमाह—

न योषित् पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥

( याज्ञ. २–४६ )

पतिकृतं योषिद्भार्या नैव दद्यात् । तथा पुत्रेण कृतं पिता न दद्यात् । तथा भार्याकृतं पतिः । कुटुम्बार्थादृत इति सर्वशेषः । अतः कुटुम्बार्थे येन केनापि कृतं तत्कुटुम्बिना देयम् । तदभावे तद्दायहरै-र्देयम् । पुत्रपौत्रैर्ऋणं देयं तदपवादः—

सुरापानद्यूतकृतं दण्डशुल्कावशिष्टकम् ।
वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥

( याज्ञ. २–४७ ) इति ।

पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम् ।
मात्रा वा यत्कुटुम्बार्थे दद्युस्तत्सर्वरिक्थिनः ॥

( ना. स्मृ. ऋ. ३ )

ये केचिद्रिक्थिकाद्या विभक्ताश्चेत् ततो दद्युः, यद्यविभक्ताः सामान्यतः ।

पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तत् गृही दातुमर्हति । इति ॥

दातव्यं पितृव्यकृतमृणम् ।

कर्त्रन्तरसमवाये क्रममाह—

रिक्थग्राही ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।
पुत्रोऽनन्याश्रित इति पुत्रहीनस्य रिक्थिनः ॥ इति ।

यो यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतमृणं दाप्यः । न चौरादिरित्यर्थः । एतेषां समवाये यावत्क्रमात्क्रमो द्रष्टव्यः । रिक्थग्राहः तदभावे योषिद्ग्राहः तदभावे पुत्र इति । ननु पुत्रे सति कथमन्यस्य रिक्थग्राहितेति चेद् ? न, क्लीबादीनां पुत्रत्वे सति अपि रिक्थहरत्वासम्भवात् । क्लीबादीननुक्रम्य "भर्त्तव्यास्तु निरंशकाः" (याज्ञ० २-१४०) इति योगिनोक्तत्वात् । 'न पतिः स्त्रीकृतमि'त्यस्यापवादः—

गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।
ऋणं दद्यात्पतिस्तासां यस्माद् वृत्तिस्तदाश्रया ॥
( याज्ञ. २-४८ )

गोपः प्रसिद्धः । सुराकारः शौण्डिकः । शैलूषो नटः । एतेषां योषिद्भिर्यदृणं(त) कृतन्तत्पतिभिर्देयम् । यतस्तेषां वृत्तिर्जीवनं तदाश्रया योषिदधीना । हेतुव्यपदेशात् अन्येषामपि योषिदधीनजीवनानां योषित्कृतं ऋणं तैर्देयमिति तत्त्वम् । पतिकृतं भार्या न दद्यादित्यपवादः—

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।
स्वयंकृतं च यदृणं नान्यत्स्त्री दातुमर्हति ॥
( याज्ञ. २-४९ )

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।

यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥

( मनु. ८–४१६ )

इति वचनेनादानाशङ्कायामुक्तम् । ततश्च मुमूर्षुणा पत्या प्रवि-श्यता(?) वा पत्या ऋणादाने नियुक्तया यत् प्रतिपन्नं तत्प(प्र)तिकृत-मृणं देयम् । यत्र पत्या सह भार्यया कृतं, तदपि भर्त्रभावे भार्यया देयम् । यच्च स्वयं कृतं तदपि देयमिति । "भार्या पुत्रश्च दासश्चे" ति वचनन्तु न स्त्र्यादीनां निर्धनत्वमावेदयति, किन्तु स्वातंत्र्यमात्रं प्रतिषेधति । "न पुत्रेण कृतं पिते"त्यस्य क्वचिदपवादः—

ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम् ।
सुतस्नेहेन वा दद्यात् नान्यथा दातुमर्हति ॥

नारदः—

पितुरेव नियोगाद्वा कुटुम्बभरणाय वा ।
कृतं वा यदृणं कृच्छ्रे दद्यात् पुत्रस्य तत्पिता ॥

( ना. स्मृ. ऋ. ११ )

अत्र पुत्रग्रहणमुपलक्षणार्थम् । तथाच कात्यायनः—

कुटुम्बार्थमशक्तौ तु गृहीते व्याधिते तथा ।
उपप्लवनिमित्तं च विद्यादापत्कृतं च यत् ॥
कन्यावैवाहिकं चैव प्रेतकार्येषु यत्कृतम् ।
एतत्सर्वं प्रदातव्यं न पतिः स्त्रीकृतं तथेति ॥

पुनरपि यदृणं देयं येन च देयं यस्मिन्काले देयं, तन्नित-यमुच्यते ।

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।

पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥

( याज्ञ. २–५० )

अत्र पितरि प्रोषिते इत्यत्र नारदोक्तः कालविशेषः—

नार्वाक् सम्वत्सराद्विंशात्पितरि प्रोषिते सुतः ।

ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि च ॥

( ना. स्मृ. ऋ. १४ ) इति ।

प्रेतेऽपि प्राप्तव्यवहारकालस्तु दद्यात् । स च कालः—

गर्भस्थैः सदृशो ज्ञेयः आऽष्टमाद्वत्सराच्छिशुः ।

बाल आ षोडशाद्वर्षात् पोगण्डश्चेति शस्यते ॥

( ना. स्मृ. ऋ. ३५ )

परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥

( ना स्मृ. ऋ. ३६ )

अप्राप्तव्यवहारश्च स्वतन्त्रोऽपि हि नर्णभाक् ।

स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ॥

( ना. स्मृ. ऋ. ३१ ) इति ।

श्राद्धे तु बालकस्याप्यधिकारः । "न ब्रह्माभिव्याहरयेदन्यत्र स्वधानिन(र)यनात्" इतिगौतमस्मरणात् । अनेकऋणदातृसमवाये योगी—

रिक्थग्राही ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।

पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥

( याज्ञ. २–५१ )

यस्तु यदीयं द्रव्यं रिक्थरूपेण गृह्णाति, यो वा रागादिव-

वशाद्यदीयां भार्यां गृह्णातिः तदभावेऽनन्याश्रितद्रव्यः पुत्रो वा ऋणं दाप्यः । नारदः—

परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥

( ना. स्मृ. स्त्रीपुं० ४५ )

कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारमर्हति(१) ॥

( ना. स्मृ. स्त्रीपुं. ४६ )

देशधर्मानपेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्तिता ॥

( ना. स्मृ. स्त्रीपुं. ५२ )

असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥

( ना. स्मृ. स्त्रीपुं. ४७ )

प्राप्ता देया (२)धनक्रीता क्षुत्पिपासातुरा च या ।
तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥

( ना. स्मृ. स्त्रीपुं. ५१ )

अन्तिमा स्वैरिणी (१) ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ॥

---

( १ ) संस्कारकर्मणा इति क० ख० पा० ।

( २ ) देशाद्धनेति ना. स्मृ. पा. ।

श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्री नृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वर श्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे ( दानप्रकारः ?) ऋणादानम् ॥

## अथ प्रातिभाव्यनिर्णयः क्रियते ।

प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह समयः । स च प्रतिभुवः कर्मरूपः । विश्वासाय यो दीयते स प्रतिभूः । स हि विश्वासे दर्शने दाने प्रत्यर्पणे चेति चतुःप्रकारः । तच्च विषयभेदाच्चतुर्धा । यथा दर्शनापेक्षायाम्—अहमेनं दर्शयिष्यामि इति प्रकारः प्रथमः । विश्वासापेक्षायाम्—अस्मत्प्रत्ययेन अस्य धनं प्रयच्छ नायं त्वां वञ्चयिष्यते [इति] द्वितीयः । दानापेक्षायां—दानेन यद्ययं न ददाति तदा अहमेव दास्यामीति तृतीयः । ऋणं प्रत्यर्पयिष्यामि इति चतुर्थः ।

तथाहि—

दर्शने प्रत्यये दाने ऋणिप्रत्यर्पणे तथा ।
चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः ॥

आहैको दर्शयामीति साधुरित्यपरोऽब्रवीत् ।
दास्याम्यहन्ते द्रविणमर्पयामीति चापरः ॥

अन्यैरुक्तम्—

अहमेनं पलायनप्रवृत्तं तदैव दर्शयिष्यामीति प्रातिभाव्यमाद्यस्य। अयं च दर्शनप्रतिभूः। अस्मत्प्रत्ययेन अस्य धनं प्रयच्छेति ब्रूते स प्रत्ययप्रतिभूः। यद्ययं ते गृहीतं द्रव्यं सवृद्धिकं न प्रयच्छति तर्ह्यहमेव दास्यामीति वदन् दानप्रतिभूः। यद्ययं गृहीतं न ददाति तदा अहमेतदीयं धनमर्पयामीति वदति [स]प्रत्यर्पणप्रतिभूः। यथाक्रममेव चतुर्णां प्रतिभुवां कर्माण्यभिधीयन्ते।

दर्शनप्रतिभूर्यस्तु देशे काले च दर्शयन् ।
निबन्धमावहेत्तत्र देवराजहृतादृते ॥

निबन्धं देयम् ।

यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः ।
अदर्शयन्स तं तस्य प्रयच्छेत्स्वधनादृणम् ॥
(मनु. ८-१५८)

दर्शनाय कालः—

नष्टस्यान्वेषणे कालं दद्यात्प्रतिभुवे धनी ।
देशानुरूपतः पक्षं मासं सार्धमथापि वा ॥

कात्यायनः—

नष्टस्यान्वेषणार्थन्तु देयं पक्षत्रयं परम् ।
यद्यसौ (१)दर्शयेत्त(द्य)त्र मोक्तव्यः प्रतिभूर्भवेत् ॥

(१) दण्डयोऽसौ इति 'क' 'ख'०। स्मृ. चं. गतस्तु स्वीकृतः।

काले प्रतीते प्रतिभूर्यदि तन्नैव दर्शयेत् ।
स तमर्थं प्रदाप्यः स्यात्प्रेते चैवं विधीयते ॥

दानप्रत्ययप्रतिभ्वोः कृत्यं नारद आह—

ऋणिष्वप्रतिकुर्वत्सु प्रत्यये वापि (घ)हापिते ।
प्रतिभूस्तदृणं दद्यात् धनं च स्थापयेत्तदा(१) ॥

(ना. स्मृ. ऋ. ११६)

धनार्पणं प्रतिभुवः कर्म कैश्चिन्निगद्यते ।
विश्वासार्थं हृतः स्वाधिर्न प्राप्तो वेति तं यदा ।
प्रापणीयस्तदा तेन देयं वा धनिनो धनम् ॥

आधिप्रत्यर्पणं प्रतिभुवः कर्म ।

खादको वित्तहीनश्चेल्लग्नको वित्तवान्यदि ।
मूल्यं तस्य भवेद्देयं न वृद्धिं दातुमर्हति ॥

खादको बन्धः लग्नकः प्रतिभूः । तत्र चतुर्णां प्रतिभुवां मध्ये आद्यौ दर्शनप्रत्ययप्रतिभुवौ चेतसोऽन्यथाभावेऽदर्शने विश्वासव्यभिचारे च दातव्यौ । राज्ञा प्रतिश्रुतं धनमुत्तमर्णस्य स्यात्। इतरस्य दानप्रतिभुवः सुता अपि दाप्याः । वितथ इत्येव साध्यत्वेन निर्धनत्वेन वा अधमर्णो प्रतिकुर्वति 'इतरस्य सुता अपि' इति (२)वदता पूर्वयोः सुता न दाप्या इत्यभिमतम्। सुता इति वदता न

---

( १ ) अनुपस्थापयंस्तथेति ना. स्मृ. पा. ।

( २ ) दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ।
आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ॥ इति याज्ञवल्क्य (२-५३) वचने इति भावः ।

पौत्रा दाप्या इत्यपि दर्शितम् । प्रतिग्रहनिमित्तं हारीतोक्तम्—

अभये प्रत्यये दानेऽनुपस्थायाप्यदर्शने(१) ।
पञ्चस्वेषु प्रकारेषु ग्राह्योऽपि प्रतिभूर्बुधैः ॥
दानोपस्थानवादेषु विश्वासशपथाय वा ।
लग्नकं कारयेदेवं यथायोगं विपर्यये ॥

दर्शनमुपस्थानम् ।

लेख्ये कृते च दिव्ये च दानप्रत्ययदर्शने ।
गृहीतबन्धोपस्थाने ऋणिवृध्यर्पणे तथा ॥

प्रतिभूमरणे त्वेवमाह योगी—

दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ।
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥
( याज्ञ. २–५४ )

य(स)दा दर्शनप्रतिभूः प्रात्ययिको वा दिवं गतो वा तदा तत्पुत्राः प्रातिभाव्यागतं पैतृकमृणं न दद्युः। यश्च प्रतिभूर्दानाय स्थितः स्वर्यातस्तस्य पुत्रा दद्युर्न पौत्राः इत्याशयः । ते च मूलमेव दद्युर्न वृद्धिम् ।

ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं पुनः ।
समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः ॥
गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत् ।
विना पित्रा धनं तस्माद्दाप्यः स्यात्तदृणं सुतः ॥
बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।

(१) 'उपस्थानेऽथ दर्शने' इति स्मृ. चं० गतः पाठः समीचीनः ।

एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥

( याज्ञ॰ २–५५ )

एकस्याधमर्णस्य छाया सादृश्यं तामाश्रित्य ।

## अथ प्रतिभूदत्तप्रतिक्रियाविधिः ।

तत्र योगी—

प्रतिभूर्दापितो यत्र प्रकाशं धनिने धनम् ।
द्विगुणं तत्र दातव्यमृणोस्तस्य न (१)तद्भवेत् ॥

( याज्ञ॰ २–५६ )

धनिकपीडितः प्रतिभूस्तत्सुतो वा जनसमक्षं यद्धनं राज्ञा दापितं तद्द्विगुणधनमृणिकः प्रतिभुवे दद्यात् । तदुक्तं नारदेन—

यश्चार्थं प्रतिभूर्दद्यात् धनिकेनोपपीडितः ।
ऋणिकस्तु प्रतिभुवे द्विगुणं प्रतिपादयेत् ॥

( ना॰ स्मृ॰ ऋ॰ १२१ )

कदाचिद्द्विगुणं दद्यादित्यपेक्षायामाह कात्यायनः—

प्रातिभाव्यन्तु यो दद्याद्दण्डनः प्रतिभावितः ।
त्रिपक्षात्परतः सोऽर्थं द्विगुणं लब्धुमर्हति ॥

द्वैगुण्यं हिरण्यविषयम्, पश्वादौ विशेषः—

सन्ततिस्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।

---

(१) प्रतिभूर्दापितो यत्तु प्रकाशं धनिनां धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥
इति याज्ञ. पा. ।

वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणाःस्मृतः ॥

( याज्ञ. २–५७ )

प्रीतिदत्तं तु यत् किञ्चिद्वर्धते न त्वयाचितम् ।

याच्यमानमदत्तं च वर्धते पञ्चकं शतम् ॥

( ना स्मृ. ऋृ. १०९ )

अतश्चास्य प्रीतिदत्तस्यापि दानदिनादारभ्य यावद्द्विगुणं कालक्रमेण वृद्धिरित्यनेन वचसोच्यते इति, तन्न । अस्यार्थस्यास्मद्वचनादप्रतीतत्वात्(१) । प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्तेऽपवादमाह 'सन्ततिस्त्री'ति पूर्वं लिखितम् । दर्शनप्रतिभूर्यदा काले दर्शयितुमशक्तोऽधमर्णं तदा तदन्वेषणाय पक्षत्रयं देयम् । दर्शयति चेत्सम्यक् । अन्यथा प्रतिभूर्धनं दाप्यः ।

निबन्धं दापयेत्तं तु प्रेते एष विधिः स्मृत इति ।

'विस्रम्भहेतू द्वावत्र प्रतिभूराधिरेव चे'त्युक्तम् । तत्र प्रतिभूर्निरूपितः । अथाधिर्निरूप्यते ।

ननु कोऽयमाधिर्नाम ? गृहीतद्रव्यस्योपरि अधमर्णेन विश्वासार्थं द्रव्यमुत्तमर्णाधिकारसम्बन्धमाधीयते क्रियते इत्याधिः । स द्वेधा । चलः स्थिरश्च । स च द्विविधः कृतकालोऽकृतकालश्च । पुनर्द्विविधो गोप्यो भोग्यश्चेति । तदुक्तम्—

अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः ।

---

(१) "द्विगुणं प्रतिदातव्य" मित्येतावदिह प्रतीयते । तस्मात्कालक्रममनपेक्ष्यैव द्विगुणं प्रतिदातव्यं ( प्रीतिदत्तमयाचितम् ) वचनारम्भसामर्थ्यादिति सुष्टूक्तम् । इति मि.

कृतकालोपनेयश्च यावद्देयोद्यतस्तथा ॥

( ना. स्मृ. श्लो. १२४ )

स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च ।

( ना. स्मृ. श्लो. १२५ )

कृतकाले आधानकाल एव 'अस्मिन्काले दीपोत्सवादौ अयमाधिर्मोक्तव्योऽन्यथा तवैवाय'मित्येवं निरूपिते काले उपनेयः आत्मसमीपं नेतव्यो मोचनीयः । देयमनतिक्रम्य यावद्देयम् । देयं दानम् । नियतस्थापित उद्यतः । यावद्देयमुद्यतो यावद्देयोद्यतः । गृहीतद्रव्यप्रत्यर्पणावधिरनियतकाल इति यावत् । गोप्योर·········[1]घटितसुवर्णरौप्यादिमञ्जूषागर्तादिस्थाने गोप्यो रक्षणीय इति यावत् । गुपू रक्षण इत्येतद्धातूत्पन्नत्वाद्गोप्यशब्दस्य । द्वितीयो भोग्यः प्रकाश्य एव गृहक्षेत्रादिः । अस्य द्विविधस्याप्याधेरुपचारो वक्तव्यः ।

तत्र भोग्यस्य फलोपाश्रय(व) उपचारः । विपर्यये फलहानिः । गुप्तस्य कालान्तरोपाश्रय उपचारः। यदि च गोप्योऽभिभोग्यो भवेत्, ततः कालान्तरे हानिर्भवेत् । यदि च प्रकाशस्याप्य[भि]भोगो भवेत्ततः सस्यविनाशहा(ना)निर्भवेदिति सुनिरूपितमाधितत्त्वम् ।

अत्र प्रकारान्तरम् । आधिर्बन्धः । स द्विविधः जङ्गमः स्थावरश्च। पुनर्द्विविधः गोप्यो भोग्यश्च । यादृच्छिकः सावधिश्च। पुनर्द्विविधः स्यात् लेख्यारूढःससाक्षिकश्चेति । तदुक्तं बृहस्पतिना—

आधिर्बन्धः समाख्यातः स च प्रोक्तस्तु षड्विधः[1](१)

---

(१) 'प्रोक्तश्चतुर्विध' इति स्मृ. चं. 'यद्यप्यत्राष्टविधो दर्शितः तथापि गोप्यभोग्ययादृच्छिकसावधिरूपभेदानामत्रानेकविशेषविधु-

जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ।
यादृच्छिकः सावधिश्च लेख्यारूढोऽथ(ति)साक्षिमानिति ॥

यादृच्छिकः—'यावदृणं न ददामि तावदयमाधिः' इत्येवं कालविशेषावधिशून्यतया कृतो यादृच्छिकः । सावधिः कृतकालोपनेयः । भारद्वाजः प्रकारान्तरेण चातुर्विध्यमाह—

आधिस्तु द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च ।
अर्थप्रत्ययहेतुश्च चतुर्थस्त्वाज्ञया कृतः ॥ इति ।
श्रावणात्पूर्वलिखितो भोग्याधिः श्रेष्ठ उच्यते ।
गोप्याधिस्तु परेभ्यः स्वं दत्त्वा यो गोप्यते गृहे ॥
अर्थप्रत्ययहेतुर्यः प्रत्ययाधिः स उच्यते ।
आज्ञाधिर्नाम यो राज्ञा संवादादाज्ञया कृतः ॥ इति ।

श्रावणं सभायां प्रकाशनमाधिग्रहणानन्तरं नाश(सा)ह्रासविकारादयो यथा न भवन्ति तथा सोपालम्भनीय इत्याह नारदः ! हारीतः—

बन्धो यथा स्थापितः स्यात्तथैव परिपालयेत् ।
अन्यथा नश्यते लाभो मूलं वा तद्व्यतिक्रमात् ॥

तथा बृहस्पतिरप्याह—

न्यासः स परिपाल्योऽसौ वृद्धिर्नश्येत दापित इति ।
भुक्ते वाऽसारतां प्राप्ते मूलहानिः प्रजायते ।

---

पयोगार्थं तात्पर्यातिशयेन कथनं नान्येषामिति वक्तुं 'प्रोक्तश्चतुर्विध' इत्युक्तम्' ( स्मृ. चं. ) ।

बहुमूल्यं यत्र नष्टमृणिकं तत्र तोषयेत् ॥
देवराजोपघातेन यत्राधिर्नाशमाप्नुयात् ।
तत्राधिं प्रापयेद्दद्यात् साधयित्वा ऋणं धनम् ॥

देवोपघातोऽग्न्युदकदेशोपप्लवादिः । स्वापराधाभावेऽपि कृतो राज्ञोपघातः । यदि ताभ्यामाधिर्नाशितः स्यात्तदा तमन्यमादध्यात् । साधयन् धनं वा दद्यात् । तथा व्यासः—

देवराजोपघाते तु न (ये) दोषो धनिनः क्वचित् ।
'आतिकस्य सव्यस्तुनाशेबन्धंवानमृणार्छितम्' ? (१) ॥

आधेरसारत्वेऽप्येवमनुसन्धेयम् । धनिप्रमादेनाधिनाशे जाते विकृतिं च प्राप्ते काणाकूटलग्नादौ मूलनाशः स्यात् । यदि पुनः प्रकाश्यादेराजदेवकादिना नाशस्तदा न धनिनो मूलधननाशः । राजक(?) स्वल्पापराधेऽपि राजगृहीतसर्वस्वेन सह तन्मध्यस्थाधेर्नष्टस्य चौरापहृतस्यापि आधेर्न मूलनाशः । तदाह—

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् ।
मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् ॥
( मनु. ८-१४४ )

तथाच नारदः—

रक्ष्यमाणोऽपि यत्राधिः कालेनेयादसारताम् ।
आधिरन्योऽस्य वा कार्यो देयं वा धनिने धनम् ॥
( ना० स्मृ० ऋ. १३० ) इति ।

---

( १ ) 'ऋणं दाप्यस्तु तन्नाशे बन्धं वान्यमृणी तदा' इति स्मृ० चं०

योगी—

आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम् ।
यातश्चेदन्य आधेयो धनभाग् वा धनी भवेत् ॥

( याज्ञ. २—६० )

न भोक्तव्यो बलादाधिरिति । कृतकालेपनेयो य आधिः अपूर्ण एवावधौ बलात्(व)न भोक्तव्यः । अथ कथमपि तदपि कृतं, ततः कालान्तरवृद्धिं परित्यजेत् । यच्च स्वल्पमाधिर्लभते तेन मूल्येन आधिधनिनं परितोषयेत् । अन्यथा आधिस्तेय(न)दोषो भवेत् । तदुक्तम्—

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् ।
मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् ॥

( मनु. ८—१४४ ) इति ।

तथा—

यः स्वामिनाननुज्ञातमाधिं भुङ्क्ते विचक्षणः ।
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्क्रयः ॥

( मनु. ८—१५० )

वर्धमानकालान्तरेनाधिं समर्पितम्-आधिस्वामिनः पार्श्वादसम्प्राप्ताभ्यनुज्ञ एव बलेनाधिं भुङ्क्ते विचक्षणः । अस्य भोगस्य निष्क्रयः प्रायश्चित्तमिति यावत् ।

रक्ष्यमाणोऽपि यत्राधिः काले यायादसारताम् ।
तत्राधिरन्यः कर्तव्यो देयं वा धनिने धनम् ॥

( ना. स्मृ. ऋ. १३० )

चतुर्विधाधिविषये विशेषो योगिनोक्तः—

आधिः प्रणश्येद्द्विगुणो धने यदि न मोक्ष्यते ।
काले कालकृतो नश्येत् फलभोग्यो न नश्यति ॥

( याज्ञ. २–५८ )

काले कृत इति कृतकालः । आहिताग्न्यादिषु पाठात् कालशब्दस्य पूर्वनिपातः । स तु काले प्राप्ते निरूपिते नश्येत् । द्वैगुण्यात् प्रागूर्ध्वं वा फलभोग्यः, फलं भोग्यं यस्याऽसौ फलभोग्यः, क्षेत्रारामादिः स कदाचिदपि न नश्यति । कृतकालस्य गोप्यस्य च तत्कालातिक्रमे नाश उक्तः । "काले कालकृतो नश्येदि"ति । अकृतकालस्य भोग्यस्य नाशाभाव उक्तः—"फलभोग्यो न नश्यती"ति । पारिशेष्यात् "आधिः प्रणश्येत्" इत्येतत् अकृतकालगोप्याधिविषयम् ।

अथ बृहस्पतिः—द्वैगुण्यातिक्रमेण निरूपितकालातिक्रमेण च विनाशे चतुर्दशदिवसप्रतीक्षणं कर्तव्यमिति—

हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधेः ।
बन्धकस्य धनी स्वामी द्विसप्ताहम्प्रतीक्ष्य च ।
तदन्तरा धनं दत्वा ऋणी चाधिमवाप्नुयात् ॥ इति ।

"आधिः प्रणश्येद्द्विगुणा" इत्यस्याऽपवादः—

चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।
सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिपादयेत् ॥

( याज्ञ. २–६१ )

अयं भावः—धनिनः स्वाच्छन्द्येन बहूमूल्यं द्रव्यमाधीकृत्य ऋणिनाल्पमेव द्रव्यमात्मसात्कृतम् । विपरीतं वाऽल्पमाधीकृत्य बहुद्रव्यमात्मसात्कृतं तद्धनं सवृद्धि ग्राह्यम् । ततश्चैवंविधे आधौ द्रव्यमेव द्विगुणं देयं नाधेर्नाशः । बन्धकरणसमय एव इत्थं परिभाषितं—द्विगुणीभूतेऽपि द्रव्ये मया द्विगुणं द्रव्यमेव दातव्यं नाधिनाश इति, [तदा]तद् द्विगुणं देयम् ।

अथवा चरित्रशब्देन गङ्गास्नानाग्निहोत्रादिजन्यमपूर्वमुक्तम् । अत्र तदेवाधीकृत्य द्रव्यं गृहीतं तत्र द्विगुणं देयं नाधेर्नाशः । किञ्च—

उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत् ।
प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात् ॥

( याज्ञ॰ २—६२ )

धनदानेनाधिमोक्षणोपस्थितस्य धनिनाधिर्मोक्तव्यः । अन्यथा स्तेनः चौरः । असन्निहिते धनिके तत्कुले तदीयहस्ते सवृद्धि धनं दत्त्वा आधिं गृह्णीयात् । प्रयोजकादेयो(?)रभावेऽसन्निधाने तस्याधेर्मूल्यं परिकल्प्य तत्रैव धनिनि तमाधिं वृद्धिरहितं स्थापयेत् । तत ऊर्ध्वं तद्धनं वृद्धिं प्राप्नुयाद्यावत्पर्यन्तं धनिकस्तद्धनं गृहीत्वा तमाधिं मुञ्चन्ति यावद्वा तन्मूल्यद्रव्यमृणे प्रवेशयति । यदि द्रव्यं द्विगुणं जातं तावदेव ग्रहीतव्यं नाधेर्नाश इति दानसमये सम्यग्भाषितञ्च, तदा द्विगुणेऽपि द्रव्ये ऋणिकस्यासन्निधौ धनिकेन किमनुष्ठेयमिति पृष्टे उत्तरं—धारणिकासन्निधाने साक्षिपुरुषसन्निधाने तमाधिं क्रीत्वा धनिकेन धनं ग्राह्यमिति । तदाह योगी—

विना धारणकाद्वापि विक्रीणीत ससाक्षिकम् ।

( याज्ञ. २–६३ ) इति

आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम् ।

यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥

( याज्ञ. २–६० ) इति ।

आधेर्गोप्यस्य भोग्यस्य च स्वीकरणादुपभोगादाधिग्रहणं सिध्येत् न साक्षिलेख्यमात्रात् । नाप्युपदेशमात्रात् । अत एवावादि नारदेन—

आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा ।

सिद्धिरस्योभयस्याऽपि भोग्यो यद्यस्ति नान्यथा ॥

( ना. स्मृ. ऋ. १३९ ) इति ।

भोग्याधौ तु विशेषः । यदा प्रयुक्तं धनं स्वकृतवृद्ध्या द्विगुणं जातं तदा आधौ कृते आध्युत्पन्ने द्रव्ये द्विगुणे धनिनः प्रविष्टे उत्तमर्णेनाधिर्देयः । यदि च आदावाधौ दत्ते 'द्विगुणीभूते त्वयाधिर्मोक्तव्यः, [इति] परिभाषया कारणान्तरेण वा भोगाभावेन यदा द्विगुणीभूतमृणं तदाधौ भोगार्थं धनिनि प्रविष्टे तदुत्पन्नद्रव्ये द्विगुणे सत्याधिर्मोक्तव्यः । अधिकोपभोगे तदपि देयमिति । सर्वथा सवृद्धिकमूलर्णापकरणार्थाध्युपयोगविषयमिदं वचनम् । लौकिकास्तमेनं क्षयाधिमाचक्षते । यत्र हि वृद्ध्यर्थ एवाध्युपयोग इति परिभाषा तत्र द्विगुणातिक्रमेऽपि यावन्मूल्यदानं तावदुपभुङ्क्त एवाधिमिति । तदुक्तं योगीश्वरेण—

यदा तु द्विगुणीभूतमृणमाधौ तदा(था) खलु ।

मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥ इति ।

( याज्ञ. २-६४ )

व्याख्यातञ्च मिताक्षरायाम् । बृहस्पतिनाप्युक्तं—

"ऋणी बन्धमवाप्नुयात् । फलभोग्यं पूर्णकालं दत्त्वे"त्यादि ।

सामकं कर्षितं तत्स्यात् तदा न धनभाग्धनी ।

ऋणी च न लभेद्बन्धं परस्परमतं विनेति ॥

बन्ध आधिः । स द्विधा सदृद्धिमूलणापाकरणार्थः वृद्धिमात्रापाकरणार्थश्च । पूर्णः कालो यस्याऽसौ पूर्णकालः । फलं भोग्यं यस्य फलभोग्यस्तमाप्नुयादिति । यदा सवृद्धिकं मूलं फलद्वारेण उत्तमर्णस्य प्रविष्टं तदा बन्धमाप्नुयात् । वृद्धिमात्रापाकरणार्थन्तु बन्धं सामकं दत्त्वा ऋणी बन्धमाप्नुयात् ।

आधिमसङ्गादन्यदुच्यते । सत्यङ्कारकृतमिति । क्रयविक्रयादिव्यवस्थानिर्वाहाय यदङ्गुलीयकादि परहस्ते समर्पितं तद्व्यतिक्रमे द्विगुणं देयम् । तत्राऽपि विशेषः—येन हि अङ्गुलीयकादि दत्तं स एव चेत् व्यवस्थां निवर्तेत तदेव हातव्यम् । इतरश्चेद् व्यवस्थामतिवर्तेत तदा तदेवाङ्गुलीयकादि द्विगुणं प्रतिपादयेत् ।

अथाधिमोचनम् । तत्र बृहस्पतिः—

धनं लीकृतं कृत्वा यदा तं प्रार्थयेद्दणी ।

तथैव तस्य मोक्तव्यस्त्व(क्ताच)न्यथा दोषभाग्धनी ॥

[मूली] कृतमधमर्णो[न देयम् । ] तच्च भोग्याधौ मूलमात्रम्, गोप्याधौ धनं सवृद्धिकं तद्दत्त्वा ऋणी[यदि] आधिं प्रार्थयते तदाऽऽधिर्देयः, अन्यथा स्तेयदोषः स्यात् । भोग्याधौ पुनर्विशेषः—

क्षेत्रादिकं यदा भुक्तमुत्पन्नमधिकं ततः ।
मूलोद(मौलोदे)यं प्रविष्टं चेत्तदाधिं प्राप्नुयादृणी ।
परितोष्य तदा क्षेत्रं दत्त्वा तु धनिके ऋणम् ॥
.................................................................?

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्री नृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे ऋणादानाख्यं व्यवहारपदम् ।



# निक्षेपविधिः ।

अथ पाठक्रमप्राप्तं निक्षेपाख्यं व्यवहारपदं वक्तव्यम् । यदा वादी 'मदीयं निक्षेपं प्रत्यर्पये'ति प्रतिजानीते तदा निक्षिप्तमप्यपह्नोतुं मतिकैतवशिक्षया वचोव्यक्तिमाश्रित्य केचिदन्यायवर्तिनो यतन्ते 'सत्यं भवतायं निक्षिप्तमेव तथापि न प्रत्यर्पयामि'....१उपनिधिर्भवति ।

वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत्(च) ॥

( याज्ञ. २–६५ )

इह किल विश्वासस्थले साक्षिलिखितग्रहणाकविधिरहितमेव सुवर्णसहस्रादिकमपि विनिक्षिपत्यविस्रम्भस्थले च लिखितसाक्षिप्रभृतिव्यतिरेकेणैकवराटकमपि नार्पयन्तीति विस्रम्भहेतौ निक्षे(क्षि)प्यद्रव्याधारभूतकरण्डादिद्रव्यस्थासंख्यातानाख्यातमुद्रामुद्रितमन्यहस्ते रक्षणार्थमर्प्य[ते]स्थाप्यते [तद् ]द्रव्यमौपनिधिकमित्यभिधीयते । तदुक्तं नारदेन—

स्वं(स)द्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥

( ना. स्मृ. उपनिधिप्र. १ )

वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥

( याज्ञ. २–६५ )

असंख्यातमविज्ञातं समुद्रं यन्निधीयते ।
तं जानीयादुपनिधिं निक्षेपं गणितं विदुरिति ॥

उपनिधिन्यासौ निक्षेपावान्तरविशेषौ । तत्स्वरूपं गुरूक्तम्—

अनाख्यातं व्यवहितमसंख्यातमदर्शितम् ।
मुद्राङ्कितं च यद्दत्तं तदौपनिधिकं स्मृतम् ॥
रा(ग)जचोरारातिभयात् दायादानाञ्च वञ्(पा)चनात् ।
स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्तितः ॥

निक्षेपस्थापनविधिस्तु मनुनोक्तो ज्ञेयः ।

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्यार्यें निक्षेपं निक्षिपेद् बुधः ।

( मनु. ८-१७९ )

स्थानं गृहं गृहस्थञ्च तद्वर्णां विविधान् गुणान् ।
सत्यं शौचं बन्धुजनं परीक्ष्य [स्थाप]येन्निधिम् ॥
स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।
प्रतिदानं तथैवास्य प्रत्ययः स्याद्विपर्यये ॥

( ना. स्मृ. उप. ६ )

बृहस्पतिः—

ससाक्षिकं रहोदत्तं द्विविधं तमुदाहृतम् ।
पुत्रवत्परिपाल्यं तद्विनश्यत्यनवेक्षया ॥
स्थापितं येन विधिना येन यच्च विभावितम् ।
तथैव तच्च दातव्यं न(म)देयं प्रत्यनन्तरमिति ॥

ननु कोऽसौ प्रत्यनन्तर इति ? स्थापकेतरस्य यस्य स्थापिते द्रव्ये स्वाम्यमस्ति स इह प्रत्यनन्तर इत्युच्यते । मनुः—

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः ।

स तथैव ग्रहीतव्यो यथा दायस्तथोद्ग्रहः ॥

( मनु. ८–१८० )

दायो दानं स्थापनमित्यर्थः । पालयितुःफलम्—

ददतो यद्भवेत्पुण्यं हेमरूप्याम्बरादिकम् ।

तत्स्यात्पा(तो)लयतो न्यासं तथैव शरणोद्ग्रहम् ॥

प्रतिदेयमित्यस्याऽपवादमाह—

न दाप्योऽपहृतं तन्तु (च) राजदैवकतस्करैः ।

( याज्ञ. २–६ ( )

एतदपि कपटविषयम् । तथा—

ग्रहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः ।

दैवराजकृते त(य)द्वत् न[चेत्त]ज्जिह्मकारितम् ॥

( ना. स्मृ. उप. ६ )

इदमप्यपोद्यते—

भ्रेषश्चेन्मार्गिते दत्ते दाप्यो दण्डश्च तत्समम् ।

( याज्ञ. २–६६ )

राजादिकर्तृको नाशो भ्रेषः । स्वाम्याज्ञां विना निक्षेपोपभोगे दोषः श्रूयते—

आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् ।

( याज्ञ. २–६७ ) इति ।

सोदयमुपभोगे सवृद्धिकं वृद्धिप्रमाणमाह कात्यायनः—

निक्षेपं वृद्धिशेषं च क्रयविक्रयमेव च ।

याच्यमानं च चेद् दद्याद्वर्धते पञ्चकं शतम् ॥

नारदः—

एष एव विधिर्दृष्टो याचितान्वाहितादिषु ।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥

( ना. स्मृ. उप. १४ )

उत्सवार्थं वस्त्रालङ्कारादि याचित्वाऽऽनीतं याचितम् । यदेकस्य हस्ते निहितं तेनाप्यनु पश्चादन्यस्य हस्ते स्वामिने देहीति निहितम्, तदन्वाहितम् । गृहस्वामिनोऽदर्शयित्वा तत्परोक्षमेव गृहजनहस्ते स्वामिने समर्पणीयमिति निक्षेपो न्यासः । समक्षन्तु समर्पणं निक्षेपः । सुवर्णकारादिहस्ते कटकादिनिर्माणायापन्यस्तस्य सुवर्णादेः प्रतिन्यासस्य च अत्राप्युपनिधिवत् प्रतिदानादिविधिर्ज्ञेयः ।

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः ।
स तथैव प्रदातव्यो यथा दायस्तथा ग्रहः ॥

( मनु. ८-१८० )

न चेद्ददाति निक्षिप्तं स द्रव्यं च यथाविधि ।
उपसंगृह्य दाप्यः स्यादिति धर्मो व्यवस्थितः ॥

अथ विपर्ययः । निक्षेपस्योपनिधेर्वा मिथ्यावादः, तदा तदनुसारेण दिव्यशपथादिना प्रत्ययः ।

याच्यमानस्तु यो दात्रा निक्षेपं न प्रयच्छति ।
दण्ड्यः स राज्ञा दुष्टात्मा नष्टे दाप्यश्च तत्समम् ॥ इति ।

( ना. स्मृ. उप. ७ )

विशेषोऽयं याचितेऽनर्पिते । राज्ञिकदैविके ग्रहीतु[र्न]निक्षेप्तुः ।
अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्वकम् ।

विचार्य तस्य वा वृत्तं साम्नैव परिशोधयेत् ॥ इति ।

( मनु. ८-१८७ )

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।

भारद्वाजकुलानुगःप्रथमया यःशाखयालङ्कृतः ॥

श्रीमद्वल्लभसूनुरात्मनिरतःसत्सम्प्रदायाग्रणीः ।

सारेऽस्मिन्व्यवहारनाम्नि चतुरे श्रीमन्दलाधीश्वरः ॥१॥

निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।

श्रीनृसिंहप्रसादेऽस्मिन्सपूर्णां कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे निक्षेपाख्यं व्यवहारपदम् ।



## सम्भूयसमुत्थानम् ॥

*अथ सम्भूयसमुत्थानाभिधं विवादपदमभिधीयते । तस्य स्वरूपं नारदेनोक्तम्—

वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते ।
तत्सम्भूयसमुत्थानं व्यवहारपदं *(१)स्मृतम् ॥

( ना. स्मृ. सं. १ )

तथा योगी—

समभागेन(२) वाणिज्यं लाभार्थं कर्म कुर्वताम् ।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥

इति ( याज्ञ. २–२५९ )

सम्भूय मिलित्वा एकत्र यं व्यवहारं प्रति यदुत्थानं तत् व्यवहारपदं ज्ञेयम् ।

फलहेतोरुपायेन कर्म सम्भूय कुर्वताम् ।
आधारभूतः प्रक्षेपः तेनोत्तिष्ठेयुरंशतः ॥

( ना. स्मृ. सं. २ )

तत्रैकेनार्थपञ्चशतानि निक्षिप्तानि अन्येन पञ्चमांशेन शतद्वयम् । अन्येनापि शतद्वयमेव । अन्येन दशमांशेनैकं शतं एते[षां] स्वांशप्रक्षेपो लाभव्ययाधारभूतः । तत्र बृहस्पतिना अधिकारिण उक्ताः—

कुलीनदक्षानलसैः प्राज्ञैर्नाणकवेदिभिः ।

---

( १ ) चिह्नगतो ग्रन्थः नास्ति 'ख' ।

( २ ) समवायेन वणिजामिति याज्ञ० पा० ।

आयव्ययज्ञैः शुचिभिः शूरैः कुर्यात्सह क्रियाम् ॥

क्रियां कृषिवाणिज्यशिल्पक्रतुसङ्गीतसै(स्तै)न्यात्मिकाम्। नाणकविज्ञानोपयोगो वाणिज्ये। कृषिकर्मणि आयव्ययज्ञानस्य। सङ्गीतादिशिल्पिक्रियायां प्राज्ञताक्रतुक्रियायां कुलीनत्वप्राज्ञत्वशुचित्वानाम्। सैन्यक्रियायां शूरत्वमात्रस्य। सर्वत्र दक्षत्वानलसत्वयोः। तद्व्यतिरिक्ता निषिध्यन्ते—

अशक्तालसरोगार्त्तमन्दभाग्यनिराश्रयैः।
वाणिज्याद्याः सहैतैस्तु न कर्तव्या बुधैः क्रिया इति।
प्रमादान्नाशितं दाप्यः प्रतिषिद्धकृतं च यत्।
असंदिष्टं च यः कुर्यात् सर्वैः सम्भूयकारिभिः॥

(ना. स्मृ. सं. ५)

सम्भूयकारिषु एकस्य दैववशात् मृत्युप्राप्तौ तत्पुत्रादीनां दायादानां तत्र तद्धनग्रहणेऽधिकारः।

प्रयोगं कुर्वते ये तु हेमधान्यरसादिना।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः॥
समौ न्यूनाधिको वांशौ येन क्षिप्तौ तथैव च।
व्ययं दद्यात्कर्म कुर्याल्लाभं गृह्णीत चैव हि॥

द्रव्यानुसारेण लाभ इत्यस्यापवादः—

समवायेन वणिजां लाभार्थं कर्म कुर्वताम्।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ॥

(याज्ञ. २–२५९)

संविदा समयेन पुरुषविशेषानुसारेण कृतौ कल्पितौ लाभा-

लाभौ ज्ञेयौ । न द्रव्यानुसारेणेत्यर्थः । सम्भूयकारिणां कर्तव्यमाह व्यासः—

समक्षमसमक्षं वा वञ्चयन्तः परस्परम् ।
नानापण्यानुसारात्ते प्रकुर्युः क्रयविक्रयौ ॥

सम्भूयकारिणां परस्परविवादे निर्णयो बृहस्पतिना दर्शितः—

परीक्षकाः साक्षि(रि)णश्च त एवोक्ताः परस्परम् ।
संदिग्धार्थे वञ्चनायां न चद्विद्वेषसंयुताः ॥
यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः स विशोध्यः स्यात्सर्ववादेष्वयं विधिः ॥

विधिरिति देवराजादिकृतद्रव्य[हानि]विषये—

क्षयहानिर्यदा(१) तत्र देवराजकृता भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः ॥
अनिर्दिष्टो वार्यमाणः प्रमादाद्यदि नाशयेत् ।
तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम् ॥

अनिर्दिष्टः समवाय्यननुज्ञातः । चोरादिभ्यो रक्षितुः कात्यायनेन लाभाधिक्यमुक्तम्—

चोरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् ।
तस्यांशो दशमो देयः सर्वद्रव्येष्वयं विधिः ।

समाहरेत् स्वशक्त्याऽऽहरेदिति भावः ।

तथा गुरुः—

देवराजभयाद्यस्तु स्वशक्त्या परिपालयेत् ।

(१) 'क्षयायैव हानिः क्षयहानिः । नतूपचयार्थं व्ययः' प. मा. ।

तस्यांशं दशमं दत्वा गृह्णीयुस्ते परस्परमिति ॥
हेमकारादयो यत्र शिल्पं संभूय कुर्वते ।
कर्मानुरूपं निर्वेशं लभेयुः स्वेछया च ते ॥

निर्वेशो भृतिः ।

शिक्षकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् लभेयुस्ते यथोत्तरम् ॥
हर्म्यं देवगृहं वापि धार्मिकोपस्कराणि च ।
सम्भूय कुर्वतां तेषां प्रमुख्यो द्व्यंशमर्हति ॥
हिरण्यरूप्यसूत्राणां काष्ठपाषाणचर्मणाम् ।
संस्कर्ता तु कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः ॥

स्तेनानां कर्तव्यमाह स एव—

स्वाम्याज्ञया तु यच्चोरैः परदेशात्समाहृतम् ।
राज्ञे दत्त्वा तु षड्भागं भजेयुस्ते यथांशतः ॥
चतुरांऽशान् भजेन्मुख्यः शूरस्त्र्यंशमवाप्नुयात् ।
समर्थस्तु हरेद्द्व्यंशं शेषाः साम्यं समाश्रिताः ॥

[ एतत् ] प्रबलवैरिविषयम् । दुर्बले तु राज्ञे दशांशाः । मुख्ये च० ४ । शू० ३ । सम० २ । शेषेष्वेकैकः(१) इति । सम्भूयकारिणामृत्विजां कर्तव्यं मनूक्तम्—

---

(१) 'राज्ञो दशांशमुत्सृज्य विभजेरन् यथाविधि । चौराणां मुख्यभूतस्तु चतुरोंऽशाँस्ततो हरेत् । शूरोंऽशांस्त्रीन्समर्थो द्वौ शेषास्त्वेकैकमेव चे'ति कात्यायनवचनान्तरादित्यर्थः ।

ऋत्विजः समवेतास्तु यथा सत्रे नियंत्रिताः ।
कुर्युर्यथार्हतः कर्म गृह्णीयुर्दक्षिणां तथा(१) इति ।
सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ॥

[ मनु॰ ८–२१० ] इति ।

ततश्चायं कर्ममार्गमर्म(र्ष)वेदिनां सम्प्रदायः—सर्वेषां ऋत्विजां मध्ये मुख्याश्चत्वारः होत्रध्वर्युब्रह्मोद्गातारः । ते अष्टाचत्वारिंशद्रूपशतार्धसाद्दिनः । अपरे मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारः । तस्य मुख्यांशस्यार्धेन चतुर्विंशतिरूपेणार्धभाजः । तृतीयिनः अच्छावाकनेष्ट्राग्नीध्रप्रतिहर्तारःमुख्यांशस्य षोडशगोरूपतृतीयांशेन अंशिनः । ग्रावस्तुते तृतीयेन सुब्रह्मण्यो(२) मुख्यभागस्य चतुर्थांशेन द्वादश गोरूपेण अंशिन इति । तथाच मनुः—

सम्भूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः ।
अनेककर्मयोगेन कर्तव्यांशप्रकल्पना ॥

[ मनु॰ ८–२११ ] इति ।

सा चेदृशी कल्पना "तस्य द्वादशशतं दक्षिणे"त्येवं क्रतुसम्बन्धित्वमात्र( म् ? )तया विहितायां दक्षिणायामेव [ न तु ] सत्त्वविशेषोल्लेखेन विहितायाम् । अत एव उक्तं(क्ते)[ति]नैव ।

रथं हरेत वाध्वर्युर्ब्रह्माधाने च वाजिनम् ।

---

( १ ) मनुस्मृतौ नोपलब्धम् ।

( २ ) 'ग्रावस्तोतृ-नेतृ पोतृ-सुब्रह्मण्या' इति प॰ मा॰ ।

होता निविद्धृतं (१ चाश्वमुद्गाता वाप्यनः क्रये ॥

[ मनु॰ ६-२०९ ] इति ।

दक्षिणांशं प्रकल्प्य दद्यात् । सम्भूयकारिणां कृषकाणां कर्तव्यमाह गुरुः—

वाह्यकर्षकबीजाद्यैः क्षेत्रोपकरणेन च ।
यैर्वै समाः स्युस्तैः सार्धं कृषिः कार्या विजानता ॥

वाह्यं लांगलादि । क्षेत्रेष्व[पि]वर्ज्यं गुरुराह—

पर्वते नगराभ्याशे तथा राजपथस्य च ।
ऊषरं मूषिकाव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥

एवं शिल्पादिकं गुरुमार्गतोऽवगन्तव्यमिति ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वर श्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे सम्भूयसमुत्थानं व्यवहारपदम् ।

---

( १ ) वापि हरेदश्वमिति म० सं० पा० ।

## अभ्युपेत्याशुश्रूषाप्रकरणम् ।

इदानीमभ्युपेत्याशुश्रूषाख्यं विवादपदमभिधीयते । अत्र शुश्रूषकः पञ्चविधः, कर्मकरश्चतुर्विधः, दासः पञ्चदशविधः । सर्वेषामस्वतन्त्रत्वं तावत्समानम् । तत्र नारदः—

शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः ।
चतुर्विधः कर्मकरस्तेषां दासास्त्रि(दि) पञ्चकाः ॥

( ना॰ स्मृ॰ अ॰ शु॰ २ )

शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् ।

( ना॰ स्मृ॰ अभ्यु॰ ३ )

सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः ।
जातकर्मकरस्योक्तो विशेषो वृत्तिरेव च ॥

( ना॰ स्मृ॰ अभ्यु॰ ४ )

सर्वेषामेषां शुश्रूषुकर्मकरदासादीनामस्वतन्त्रत्वं सामान्यम् । तेषां द्विविधं कर्म शुभमशुभं च । तत्राद्यं कर्मकराणाम् । अशुभं दासानाम् । योगी—

कृतशिल्पोऽपि निवसेत्कृतकालं गुरोर्गृहे ।
अन्तेवासी गुरुप्राप्तभो(स)जनस्तत्फलप्रदः ॥

( याज्ञ॰ २–१८४ )

शिक्षयन्तमदुष्टं च यस्त्वाचार्यं परित्यजेत् ।
बलाद्दासयितव्यः स्याद्वधं बन्धं च सोऽर्हति ॥

( ना॰ स्मृ॰ अभ्यु॰ १८ )

बन्धस्ताडनादि । भृतकस्त्रिविधः—भृतिकृतः, कर्मकृतः, कालकृतश्चेति । तत्र विशेषो गुरूक्तः—

यो भुङ्क्ते परदासीं तु स ज्ञेयो वडवाभृतः ।
कर्म तत्स्वामिनः कुर्याद्यथाऽन्योऽर्थभृतो नरः ॥
बहुधार्थभृतः प्रोक्तस्तथा भागभृतोऽपरः ।
हीनमध्योत्तमत्वं च सर्वेषामेव चोदितम् ॥
दिनमासार्धषण्मासद्वित्रिमासभृतस्तथा ।
कर्म कुर्यात्प्रतिज्ञातं लभते परिभाषितम् ॥ इति ।

अर्थे भृतस्य बहुत्वमर्थाल्पत्वबहुत्वापेक्षयाऽवगन्तव्यम् । अर्थाल्पत्वबहुत्वे च भृत्यशक्त्यनुसारतो द्रष्टव्ये । तत्र—

भृतकस्त्रिविधो ज्ञेय उत्तमो मध्यमोऽधमः ।
शक्तिभक्त्यनुरूपा हि ( सारस्यात् ) एषां कर्माश्रया भृतिः ॥

( ना. स्मृ. अभ्यु. २२ )

द्विप्रकारा भागभृतः कृषिगो(ना)जीविनः स्मृताः ।
जातसस्यात्तथा क्षीराल्लभते तु न संशयः ॥
अर्थेष्वधिकृतो यः स्यात् कुटुम्बस्य तथोपरि ।
सोऽधिकर्मकृतो ज्ञेयः स च कौटुम्बिक(न)स्तथा ॥

( ना. स्मृ. अभ्यु. २४ )

गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ।

गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रगुदशोधनम्(१) ॥

( ना॰ स्मृ॰ अभ्यु॰ ६ )

इच्छ(ष्ट)तः स्वामिनः स्वाङ्गैरुपस्थानमथोऽन्ततः ।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ॥

( ना॰ स्मृ॰ अभ्यु॰ ७ )

तत्र शिष्यो वेदविद्यार्थी । अन्तेवासी शिल्पशिक्षार्थी । मूल्येन च कर्म करोति स भृतकः । अधिकर्मकृत् कुर्वतामधिष्ठा(ष्ठि)ता यः। अशुचिस्थानमुच्छिष्टप्रक्षेपार्थं गर्तादिकम् । अवस्करो(र)गृह-मार्जनपांस्वादिनिच(श्च)यस्थानम् । उज्झनं(दुत्क्रां)त्यागः । भृत-कश्च त्रिविधः—

उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः ।
अधमो भारवाही स्यादित्येवं त्रिविधो भृतः ॥

( ना॰ स्मृ॰ अभ्यु॰ २३ )

गृहाज्जातस्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥

( ना॰ स्मृ॰ अभ्यु॰ २६ )

मोक्षितो म(मो)हतश्चर्णाद्युद्धप्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥

( ना॰ स्मृ॰ अभ्यु॰ २७ )

भक्तदासश्च विज्ञेयस्तथैव वडवाभृतः ।

---

( १ ) ग्रहणोज्झनमिति ना॰ स्मृ॰ पाठः । अयमेव च ग्रन्थकृत्सम्मतः पाठः, अग्रे 'उज्झनं त्यागः' इति विवरणात् ।

विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥

( ना. स्मृ. अभ्यु. २८ ) इति ।

शिष्यकर्मकृतो विशेषः—

आविद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम् ।
तद्वच्च गुरुदारेषु गुरुपुत्रे तथैव च ॥

( ना. स्मृ. अभ्यु. ८ )

तथाच गुरुः—

विद्या त्रयी समाख्याता ऋग्यजुःसामलक्षणा ।
तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्र(च्चार्थ)चोदिता(दना)म् ॥

अन्तेवासिनोऽपि कर्मकृतो विशेषमाह—

विज्ञानमुच्यते शिल्पं हेमरूप्यादिसंस्कृतिः ।
नृत्तादिकं च तत्प्राप्तं कुर्यात्कर्म गुरोर्गृहे ॥ इति ।
ब्रह्मचारी चरेद् भैक्ष्यमधःशाय्यनलंकृतः ।
जघन्यशायी सर्वेषां पूर्वोत्थायी गुरोर्गृहे ॥

( ना. स्मृ. अभ्यु. ९ )

नासंदिष्टः प्रतिष्ठेत तिष्ठेद्वा गुरुणा क्वचित् ।
संदिष्टश्च प्रतिष्ठेत तिष्ठेद्वा गुरुणा क्वचित्(१) ॥

( ना. स्मृ. अभ्यु. १० )

भृशं न ताडयेदेनं नोत्तमांगे न वक्षसि ।
अनुशास्य च विश्वास्यः शास्यो राज्ञाऽन्यथा गुरुः ॥

( ना. स्मृ. अभ्यु. १४ )

---

( १ ) 'संदिष्टः प्रतिकुर्वीत शक्तश्चेदविचारयन्निति ना.स्मृ. पा.।

समावृत्तश्च गुरवे प्रदाय गुरुदक्षिणाम्(१) ।

( ना. स्मृ. अभ्यु. १५ )

आचार्यकृत्यम्—

आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।
न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ॥

( ना. स्मृ. अभ्यु. १७ )

शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् ।
तत्र कर्म च यत्कुर्यात् आचार्यस्यैव तत्फलम् ॥

( ना. स्मृ. अभ्यु. १९ )

तेन अत्यन्तपारार्थ्यमासाद्य शुश्रूषका दासाः, पारार्थ्यमात्रमासाद्य शुश्रूषकाः कर्मकराः इत्यादि ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्री नृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वर श्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराज श्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे अभ्युपेत्याशुश्रूषाख्यं व्यवहारपदम् ।

(१) अस्योत्तरार्धस्तु-प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृतेति ।

## अथ वेतनस्यानपाकर्मोच्यते ।

भृत्यानां वेतनस्योक्तो दा(ना)नादानविधिक्रमः ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥

( ना. स्मृ. वेत. १ )

वेतनं कर्ममूल्यं तस्यानपाकर्म भृत्यायासमर्पणं तस्य समर्पितस्य-(येऽपि) परावृत्तिर्वा(त्वम्) ।

भृत्याय वेतनं दद्यात् कर्म स्वामी यथाक्रमम् ।
आदौ मध्येऽवसाने च कर्मणां यद्विनिश्चितम् ॥

( ना. स्मृ. वे. २ )

यो भृतिं वेतनं जल्पयित्वा प्रमाणीकृत्य कर्म स्वीकरोति स भृत्य इत्युच्यते । तस्मै गृहस्वामी वेतनं दद्यात् । तच्च किञ्चिदादौ किञ्चिन्मध्ये किञ्चित्परिसमाप्तौ । यद्यथा निश्चितं निष्टङ्कितं तत्रैव । एतावदहं ते कर्म करणाय दास्यामीति भाषाया अभावे विशेषः श्रूयते—

भृतावनिश्चितायां ते दशभागमवाप्नुयुः ।
लाभगोवीर्य(१)सस्यानां वणिग्गोपकृषीवलाः ॥

( ना. स्मृ. वे. ३ )

यत्र हि अनिष्टंकितवेतना एव भृतकाः वाणिज्यगोरक्षणकृषि-प्रारम्भेषु वर्षावधिन्निरन्तरे ''''मुक्षणाः'''''न १ च व्याप्रियन्ते तत्र वणिक्गोपालकृषीवलाख्योऽपि लाभस्य दशांशं प्राप्नुयुः ।

---

( १ ) गोवीर्यं गवां सारभूतं क्षीरमित्यर्थः। गोबीजेति ना० स्मृ० पा०।

कर्मोपकरणं चैषां क्रियां प्रति यदाहितम् ।
आत्मभावेन(१) त(य)त्कुर्यात् न जैह्म्येन समाचरेत् ॥
( ना. स्मृ. वे. ४ )

अयमर्थः—अत्र यस्य यस्य कर्मणः यद्यदुपकरणद्रव्यं क्रियां प्रति उपयोगि तत् कर्मस्वामी तेषामजैह्म्येन अकौटिल्येनामात्मभावेन उपहरेत् ।

कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात् ।
भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमावहेत् ॥
( ना. स्मृ. वे. ५ )(२)

एतत्कर्मकरणं प्रतिश्रुत्य प्रतिज्ञाय–अकुर्वाणो भृतिं दत्त्वा बलात्करणीयः । यस्य भृतिं गृहीत्वापि कर्म न कुर्यात् स द्विगुणां भृतिं ग्रहीतव्यः ।

काले पूर्णे त्यजन् [कर्म]भृतिनाशं समाप्नुयात् ।
स्वामिदोषादपक्रम्य यावत् कृतमाप्नुयात् ॥

जल्पितकर्मकालेऽपूर्ण एव कर्म परित्यजन् भृतिनाशं प्राप्नोति भृत्यः । स्वामिदोषेण परित्यागे यावन्मात्रं कर्मा[नु]तिष्ठति तावन्मात्रां भृतिं लभेतेति । तत्र गृहस्वामी यदि भृत्याय दशमं भागं न

---

( १ ) तत्स्वभावेनेति ना० स्मृ० पा० ।

( २ ) अयं श्लोकः 'इति वेतनानपाकर्मे'त्यस्यादौ लिखितः 'क' पुस्तके, स त्वत्रैवोचितः । अत्रैव विवरणदर्शनात् । 'ख' पुस्तके तु नास्त्येव ।

प्रयच्छति, तदाऽसौ राज्ञा दाप्यः । तदाह योगी—

गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत् ।
अगृहीते स्वयं दाप्यो भृत्यै रक्ष्य(गृह)उपस्करः ॥

( याज्ञ. २–१९३ )

उपकरणं लाङ्गलादीनां [प्र]ग्रहादिकम् । भृतेरनिश्चये आह—

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत् स महीभृता ॥

( याज्ञ. २–१९४ )

'त्रिभागं पञ्चभागं वा गृह्णीयात् सीरवाहनः' इति–बृहस्पति वचस्तु आयाससाध्याकृष्टक्षेत्रविषयम् । तत्रापि त्रिभागपञ्चविभागौ व्यवस्थया विकल्पितौ ज्ञेयौ । तथा च स एव—

"अशनाच्छादनाभ्यां च क्षेत्रजातसस्य[ात् पञ्चमं]भागं गृह्णीयात् ताभ्यामभृतस्तु(मनिच्छन्) तृतीयं भाग"मिति । एतद्दास्यामि इति परिभाषायां सत्यामपि क्वचित्ततो न्यूनं स्वामिबुद्धिपरिकल्पितम् । तेन क्वचित्ततोऽल्पाधिकं देयम् । अ[न]नुकारिणं प्रति योगिना उक्तम्—

देशं कालं च योऽतीयाल्लाभं कुर्याच्च योऽन्यथा ।
तदा स्यात्स्वामिनश्छन्दोऽधिकं देयं ततोऽधिके ॥

( याज्ञ. २–१९५ ) इति

यः स्वाम्याज्ञामन्तरेण वाणिज्यादिलाभसाधनदेशकालातिक्रमं करोति, लाभं च बहुतरव्ययकरणादल्पं करोति, तस्मै स्वामी स्वेच्छानुसारेण किञ्चिद्दद्यात् । यस्तु स्वातन्त्र्येण बहुकालं करोति तस्मै परिभाषितमूल्यादधिकं दातव्यम् । ततश्चायमर्थः–[यः]

देशकालाद्यतिक्रमेण हानिं करोति तदुक्तिमन्तरेणैव तदा स्वामिन इच्छावशाद् भृतिर्न सर्वा । लाभकरणे तु भृतेरधिकमपि दातव्यमिति । तदाह नारदः—

भाण्डं व्यसनमागच्छेत् यदि वाहकदोषतः ।
दाप्यो यत्तत्र नश्येत्तु दैवराजकृताहते ॥ इति ।

( ना. स्मृ. वे. ६ )

योगी—

प्रकान्ते सप्तमं भागं चतुर्थं पथि सन्त्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च ॥

( याज्ञ. २–१९८ )

मनुः—

आर्तस्तु कुर्यात् स्वस्थः सन् यथाभाषितमादितः ।
*सुदीर्घस्यापि कालस्य तल्लभेतैव वेतनम् ॥

( मनु. ८–२१६ )

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् ।
उभयोरप्यसाध्यं चेत्साध्ये कुर्याद्यथाश्रुतम् ॥

नारदः(१)—

गृहीतवेतनः कर्म न करोति यदा भृतः ।
समर्थश्चेद्दमं दाप्यो द्विगुणं तत्र वेतनम् ॥

गृहीतवेतनविषये योगी—

---

( १ ) ना० स्मृ० नोपलभ्यते ।

अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः । इति ॥

( याज्ञ. २-१९३ )

इति वेतनानपाकर्म*(१) ।

# अथ दत्तानपकर्मस्वरूपम् ।

दत्तस्यानपक[र्म]पुनरादानं यस्ये....?दत्तानपाकर्म । तत्र चतुर्धा दानमार्गः—देयमदेयं दत्तमदत्तं चेति । तत्र देयमेकप्रकारमदेयमष्टविधम् । दत्तं सप्तविधमदत्तं षोडशप्रकारमिति । तत्र देयं दानार्हम्, अदेयं दानानर्हम्, दत्तं स्थितम्, अदत्तमस्थिरमिति ।

दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम् ।

( ना. स्मृ. दत्ता. १ )

असम्यगविहितमार्गेण ।

अदेयं चाथ देयं च दत्तं चाऽदत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ।

( ना. स्मृ. दत्ता. २ )

तत्रेहाष्टावदेयानि देयमेकविधं स्मृतम् ।
दत्तं सप्तविधं ज्ञेयमदत्तं षोडशात्मकम् ॥

( ना. स्मृ. दत्ता. ३ )

(१) **चिह्नगतो ग्रन्थः 'ख' पुस्तके नास्ति ।

तत्रादेयं सभेदं गुरूक्तम्—

सामान्यः पुत्रदाराधि(दि)सर्वस्वन्यास(वान्य)याचितम् ।
प्रतिश्रुतमथान्यस्या(न्येन)देयमष्टविधा मतम् ॥

सामान्यमनेकस्वतन्त्रस्वामिकं रथ्यादि । तथा नारदः—

अन्वाहितं याचितकमाधिः साधारणं तु यत् ॥
निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ।

( ना० स्मृ० दत्ता० ४ )

आपत्स्वपि हि कन्यासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ।

( ना० स्मृ० दत्ता ५ )

अन्वाहिताधिवत् स्त्री[धनम्]अनिषिद्धदानक्रियायोग्यं देयम् । अस्वतया निषिद्धतया दानानर्हमदेयम् । अन्वाहिताधिवत् स्त्रीधनादिकमदेयम् । दक्षः—

सामान्यं याचितं न्यास आधि(दि)र्दाराश्च तद्धनम् ।
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ॥
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥

अदेयदानप्रतिग्रहयोर्दण्डः—

अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चोरवच्छास्यौ दण्ड्यौ चोत्तमसाहसमिति ॥

अदेयमदत्तस्याप्युपलक्षणम् । अदत्तेऽपि दानग्रहौ न कार्यौ ।

नारदः—

गृह्णात्यदत्तं यो मोहात् यश्चादत्तं प्रयच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीभृता ॥(१)

( ना. स्मृ. दत्ता. १२ ) इति ।

देयमुक्तं नारदेन—

यस्य त्रैवार्षिकं वित्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ।

( ना. स्मृ. दत्ता. ७ ) ।

इदं हि कुटुम्बभरणवित्तप्रमाणम् ।

कुटुम्बभरणाद्द्रव्यं यत्किञ्चिदवशिष्यते ।
तद्देयमुपरुध्यान्यद्ददन्दोषमवाप्नुयात् ॥

( ना. स्मृ. दत्ता. ६ ) ।

भर्तव्यं कुटुम्बमनुपरुध्येत्यर्थः ।

कात्यायनः—

सर्वस्वं गृहवर्जं तु कुटुम्बभरणादिकम् ।
यद्द्रव्यं तत्स्वकं देयमदेयं स्यादतोऽन्यथेति ॥

योगी—

स्वं कुटुम्बाविरोधेन देयं दारसुतादृते ।

( याज्ञ. २-१०५ ) इति ।

पुत्राऽदेयता एकपुत्रविषयिणी । तस्यापि दाने कृते सन्तानवि-

---

( १ ) अस्य स्थाने 'अदेयदायको दण्ड्यस्तथाऽदत्तप्रतीच्छकः ॥' इति ना० स्मृ० दृश्यते ।

च्छेदापत्तेः। अत एव वसिष्ठः एकपुत्रदानं प्रतिषेधति—'नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वे'ति । ततश्च—

सुतस्य सुतदाराणां वशित्वं त्वनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥

इत्यादीनां सुतस्यादेयत्वप्रतिपादकानामेकपुत्रविषयतैव ज्ञातव्या । अनेकपुत्रेष्वपि मातृपितृवियोगसहनक्षम एव देयः । तदाह कात्यायनः—'न देयाः स्युरनिच्छवः' इति । इदमप्यनापद्विषयम् ।

आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्त्तन्त इति शास्त्रस्य निश्चयः ॥

इति स्मृतेः ।

दत्तादत्तविषये नारदः—

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः ॥

( ना. स्मृ. दत्ता. ८ )(१) इति ।

पण्यस्य क्रीतस्य द्रव्यस्य मूल्यम् । भृतिर्वेतनं कृतकर्मणो गतम् । तुष्ट्या बन्दिमुखेभ्यो दत्तम् । स्नेहा[द्]दुहित्रादिभ्यः । स्त्रीशुल्कं परिणयार्थं दत्तम् । अनु[ग्रहः]अदृष्टार्थं दत्तम् ।

अदत्तं तु भयक्रोधशोकवेगरुजान्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥

( ना. स्मृ. दत्ता. ९ ) ।

---

(१) 'स्त्रीभक्त्यनुग्रहार्थं च दत्तं सप्तविधं स्मृतमि'ति ना० स्मृ० पा० ।

बालमूढा(ढ्रा)स्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितम् ।
कर्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत् ॥

( ना० स्मृ० दत्ता० १० )

अपात्रं पात्रमित्युक्ते कार्ये वा धर्मसंहिते ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम् ॥

( ना० स्मृ० दत्ता० ११ ) ।

आर्त्तदत्तस्या[दत्त]त्वं(ल)धर्मकार्यव्यतिरिक्तविषयम् । तथा कात्यायनः—

स्वस्थे(ल्पे)नार्त्तेन चादत्तं साधितं कर्मका(धा)रणात् ।
अदत्वा तु मृतो दाप्यस्तत्सुतो नात्र संशयः ॥

देशिकेन नदीपूरनीयमानार्त्तेनोक्तं यो मां म्रियमाणं रक्षयति तस्याहं सुवर्णशतं दास्यामीति प्रतिश्रुतेनार्त्तेन [दत्तमदत्तम्] । नारदः—

गृह्णात्यदत्तं यो लोभात् यश्चादेयं प्रयच्छति ।
अदेयदापको दण्ड्यः तथाऽदत्तप्रतीच्छकः ॥

( ना० स्मृ० दत्ता० १२ )

अथादत्तं भयेन बंदिग्राहिभ्यो दत्तम् । क्रोधेन पुत्रादिविषयकोपेन दत्तम् । पुत्रवियोगादिशोकवशेन दत्तम् । उत्कोचेन कार्यप्रतिबन्धनिराशार्थं दत्तम् । अधिकृतेभ्यो''''परिहासेन दत्तम् । छलयोगतः शतादिकमिति संधाय सहस्रमिति परिभाष्य दत्तम् । बालेनाजातषोडशवर्षेण दत्तम् । मूढेन लोकवेदानभिज्ञेन दत्तम् । अस्वतन्त्रेण पुत्रदासादिना दत्तम् । आर्त्तेन रोगोपहतेन दत्तम् । मत्तेन

दत्तम् । रातिका(?) द्युन्मादयस्तेन दत्तम् । अपवर्जितं—अयं मदीय-मिदं करिष्यतीति दत्तम् । प्रतिलाभेच्छया प्रतिलाभाय कुर्वाणाय दत्तम् । अयोग्याय योग्योक्तिमात्रेण दत्तम् । यज्ञं करिष्यामीति धनं लब्ध्वा द्यूतादौ विनियुंजानाय दत्तम् । एवं षोडशप्रकारम-प्यदत्तं पुनरादेयम् । तदुक्तम्—

पण्यमूल्यं भृतिस्तुष्टिः स्नेहात्प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थं च दत्तं सप्तविधं स्मृतम् ॥

( ना. स्मृ. दत्ता. ८ )

एतेषु सप्तसु अपि[अ]विरुद्धस्थानेषु दत्तं तदेव दत्तमित्युच्यते ।

अदत्तं तु(त्तम)भयक्रोधद्वेषशोकरुजान्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥

( ना. स्मृ. दत्ता. ९ )

बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम् ।
कर्त्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥

( ना. स्मृ. दत्ता. १० )

अपात्रे पात्रमित्युक्ते कार्ये वा धर्मसंहिते ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम् ॥ इति ।

( ना. स्मृ. दत्ता. ११ )

*गोपालभेद उच्यते ।

गवां शताद्वत्सतरी धेनुः स्याद्द्विशता भृतिः ।
प्रति संवत्सरं गोपे संदोहो वाष्टमेऽहनि ॥

( ना. स्मृ. वे. १० )

अत्र गोपालवृत्तिरधिकृता । सा चानु(?)सारतस्त्रिविधा दर्शिता । एवं तावत् गोशतमात्ररक्षणात् तस्य वृत्तौ प्रतिवर्षं वत्सतरी भवति । चतुर्हायनेति यावत् । द्विशतरक्षणात्तु धेनुर्गौर्भवति । यद्वा अष्टमदिने सन्दोहोऽप्यारक्षितगवां दुग्धमेव भवतीति सैव वृत्तिरस्य तृतीयो वृत्तिप्रकार इति ।

स्याच्चेद्गोव्यसनं गोपो व्यावच्छेत्तत्र शक्तितः ।
अशक्तौ चापि चत्वारं(?) (१)स्वामिने तन्निवेदयेत् ॥

( ना. स्मृ. वे. १२ )

अजाविके तु संरुद्धे तथा पाले त्वनायति(२) ।
यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत् ॥

( मनु. ८-२३५ )

विघुष्य च हृतं चौरैः न पालो दातुमर्हति ।(३) इति ।
शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विस्तमावहेत् ॥
अप्रयच्छंस्तदा शुल्कमनुभूय पुमान् स्त्रियम् ।

( ना. स्मृ. वे. १८ )

जल्पितशुल्कं कल्पितभाटकं पण्यस्त्री गृहीत्वा केनापि स्वकीयापराधेन नेच्छन्ती द्विगुणं द्रव्यं दद्यात् । तथा कामुकः

---

( १ ) अशक्तस्तूर्णमागम्येति ना० स्मृ० पा० ।

( २ ) 'अनाविके वृको रुद्धे तथा पालेऽप्यनापदि' इति 'क' 'ख' ।

( ३ ) अस्योत्तरार्धस्तु--'यदि देशे च काले च स्वामिनः स्वस्य शंसति' ( मनु० ८-२३३ ) इति ।

पुमानपि जल्पितभाटकमनर्पितबन्धकां तां भुक्त्वा अप्रयच्छन् द्विगुणामावहेदिति ।

अनिच्छन्तीं बलाद्यस्तु बहुभिर्वा समाविशेत् ।
शुल्कमष्टगुणं दाप्यो विनयं तावदेव तु ॥

( ना. स्मृ. वे. १९ )

यः पुमाननिच्छन्तीं स्त्रियं बलान्नीयमानोऽष्टगुणं दाप्यः । एवं स्त्र्यपि एकं पुरुषं जल्पयित्वा बहुभिर्वा पुरुषैर्वसेत् शुल्कमष्टगुणं दाप्या ।

व्याधिता सश्रमा व्यग्रा राजकार्यपरायणा ।
निमंत्रिता च नागच्छेदवाच्या दण्डतः स्त्रियः ॥

गृहीतशुल्काऽपि यदि अकस्माद् व्याधिता एतास्ववस्थासु स्त्रियो दण्डं न प्राप्नुवंतीति ।

वैश्याः प्रधाना(कारा)यानार्थ(?)कामुकास्ते सहोषिताः ।
तत्समुत्थेषु कार्येषु संशये निर्णयं विदुरिति ॥
पराजये गृहं गत्वा स्तोमं दत्त्वा वसेत्तथा ॥
स तद् गृहीत्वा निर्गच्छेत्त्यक्त्वा सर्वमथोषितम् ॥*(१)

( ना. स्मृ. वे. २० )

---

( १ ) * * चिह्नगतो ग्रन्थः वेतनानपाकर्मप्रकरणे एव लेखितुमुचितः । अस्य तत्प्रकरणीयत्वेन प्रागुप ( पृ० १४ ) पादनात् । ना० स्मृ० व्याख्यायामपि तथैव दर्शनात् ।

मौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि चतुरे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन्संपूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्म-हाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे दत्तानपकर्माख्यं व्यवहारपदम् ।



## अथास्वामिविक्रयाभिधं व्यवहारपदमभिधीयते ।

अस्वामिदत्तऋणादिष्वपि न्यायस्य समानत्वात्सर्वशेषतया सर्वसाधारणमिदं प्रकरणम् । तत्स्वरूपं मनुनोक्तं—

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः ।

( मनु. ८-१९७ )

तथा—

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वाऽपहृत्य वा ।
विक्रीयतेऽसमक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥

( ना. स्मृ. अस्वा. १ )

तथा गुरुरपि—

संक्षेपान्यकृतन्यासं हृतयाचितबन्धकम् ।
उपांशु येन विक्रीतमस्वामी सोऽभिधीयते ॥

योगी—

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ॥ इति ।

( याज्ञ. २-१६८ )

अन्यविक्रीतमस्वामिविक्रीतम्। विक्रीतग्रहणं दत्ताहितयोरुपलक्षणार्थम् । स्वं स्वकीयं द्रव्यं यदि पश्यति तदा तद् बलेन ग्राह्यम् । क्रेतुरप्रकाशिते क्रयदोषः । अस्वामिकृतव्यवहारो निवर्त[ति । य]था कात्यायन आह—

अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत् ।

अस्वामिना कृतो यस्तु क्रयो विक्रय एव वा ॥

अकृतः स तु विज्ञेयो व्यवहारेषु नित्यशः ॥ इति ।

तस्मादयमर्थः—अस्वामिविक्रीतं द्रव्यं स्वामिना बलाद् ग्राह्य-मिति । तदुक्तं नारदेन—

द्रव्यमस्वामिक्रीतं प्राप्य स्वामी समाप्नुयात् ।

( ना. स्मृ. अस्वा. २ )

इति । द्रव्यं यत् ग्राह्यं तद्राज्ञे निवेद्यैव । अन्यथा दण्ड्यत्वा-पत्तेः । तथा च योगी—

हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।

अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥ इति ।

( याज्ञ. २-१७२ )

यदि हि द्रव्यं स्वामिना परहस्तेनाप्तुमशक्यं तदा ह्येवं प्रकारः कर्त्तव्यः—

नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम् ।

देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत् ॥

( याज्ञ. २-१६९ )

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।

पञ्चबन्धो दमस्तस्य राज्ञे ते(वा)नाविभाविते ॥ इति ।

( याज्ञ. २-१७१ )

नष्टापाहृतेत्यस्यार्थः—नष्टमपहृतं वा स्वकीयं द्रव्यमपहर्तृहस्ते दृष्ट्वा अपहर्तारं राजपुरुषादिना ग्राहयेत् । राजपुरुषानयनार्थं देश-कालातिक्रमश्चेद्भवति, तदा स्वयमेव (सम?)ग्राह्यः राज्ञे समर्पणीयः।

यदा पुनर्विक्रयात् पूर्वमेव स्वकायं द्रव्यं कस्यचिद्धस्ते पश्यति, तदा त्वाह स एव—

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ॥ इति ।

( याज्ञ. २–१६८ )

स्वामी स्वसम्बन्धिद्रव्यं यद्यन्यविक्रीतं पश्येत्तदा गृह्णीयात् । अस्वामिविक्रयस्य स्व[त्व]हेतुत्वाभावात् । क्रेतुः पुनरप्रकाशिते गोपिते क्रये दोषः स्यात् । हीनात्तद्द्रव्यागमोपायहीनात् । रह एकान्ते । हीनमूल्ये अल्प(न्ये)तरेण अधिकमूल्ये क्रये। हीने रात्र्यादौ कृते क्रेता(यसे)चौरः । स तस्करवद्दण्डच इत्यर्थः । तदुक्तं—

येन क्रीतं तु मूल्येन राज्ञे न विनिवेदितम् ।
न तत्र विद्यते दोषः तेन स्यादुपविक्रयात् ॥

उपविक्रयशब्दस्यार्थः क्वचिद्दृष्टः-

अन्तर्गृहं बहिर्ग्रामं निशायामसतो जनात् ।
हीनमूल्येन च यत्क्रीतं ज्ञेयोऽसावुपविक्रयः ॥ इति ।

असतो जनाच्चाण्डालादेः ।

प्रकाशं वा क्रये कुर्यात् मूल्यं वापि समर्पयेत् ।
मूलानयनकालश्च देयो योजनसङ्ख्यया ॥

क्रेता एतत् कुर्यात् ।

अथ मूलमनाहार्यं स विक्रेताऽपि दृश्यते ।
आदौ तन्मुच्यते राज्ञा नास्तिकस्याल्लभेद्धनम् । (१)

( १ ) अथ मूलमनाहार्यं प्रकाशक्रयशोधितम् ।

अनाहार्यमूले साधुः ।

अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः ।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग् भवेत् ॥

( ना. स्मृ. अस्वा. ३ )

स्वाम्यनुमतिरहिताद्दासाद्यो गृह्णाति तथा चोरसङ्गतः असत्सङ्गपार्श्वात् ततः रह एव एकान्ते क्रीतं ततः क्रेतुश्चौर्यम् । तत्र विशेषः—'आगमेनोपभोगेन' ( याज्ञ. २-१७७ ) इति ।

लब्धं दानक्रयप्राप्तं शौर्यवैवाहिकं तथा ।
बांधवादप्रजाज्जातं षड्विधस्तु धनागमः ॥
नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम्(१) ।

ततः किं कृत्यमित्युक्तं तेन योगिना—

विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी(याज्ञ. २-१७०)इति॥

गुरुः—

मूले(ल्ये) समाहिते क्रेता नाभियोज्यः कथञ्चन ।
मूलेन सह वाहस्तु नाष्टिकस्य विधीयते ॥ इति ।

नाष्टिकविषये गौतमः—

'प्रनष्टमस्वामिकमधिगम्य राज्ञे ब्रूयुर्विख्याप्य सम्वत्सरं राज्ञा रक्ष्यः' इति ।

---

अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥
( मनु ८-२०२ ) इति श्लोकोऽत्र पठितुमुचितः ।

नारदः—

चिरेण पिहितं (१)लब्ध्वा राजन्नुपहरेन्निधिम् ।
राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते ॥
( ना. स्मृ. अस्वा. ६ )

ब्राह्मणोऽपि निधिं लब्ध्वा क्षत्रियाय निवेदयेत् ।
गृह्णन् शुद्धोऽप्यशुद्धः स्यात्ततो दण्ड्यस्तु नान्यथा ॥

वृत्तसम्पन्नब्राह्मणविषये मनुः—

प्रनष्टस्वामिकद्रव्यं राज्ञे चैतन्निशामयेत् ।
अर्वाक् सम्वत्सरात्स्वामी परतो नृपतिर्हरेत्(२) ॥

रक्षणनिमित्तं षड्भागग्रहणं चोक्तम्—

आददीत तु षड्भागं प्रनष्टाधिगतान्नृपः ।
दशमं द्वादशं वापि सतां धर्ममनुस्मरन् ॥
( मनु. ८-३३ )

तृतीयद्वितीयप्रथमसम्वत्सरेषु षष्ठ्यादि(?) षड्भागादि । [इ]द-(य)मनुक्तद्रव्यग्रहणस्य । द्रव्यविशेषेऽपवादः—

पणानेकशफे दद्यात् चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥ इति ।
( याज्ञ. २-१७४ )

निधिविषये गुरुः—

पूर्वस्वामी तु [यद्]द्रव्यं यदागत्य विचारयेत् ।

---

(१) परेण निहितमिति ना. स्मृ. पा. ।

(२) एतस्य स्थाने—प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत्। अर्वाक् त्र्यब्दाध्दरेत्स्वामी परेण नृपतिर्हरेदिति मनु (८-३०) पाठः।

तत्र मूलं दर्श(शा)नीयं क्रेतुः शुद्धिस्ततो भवेत् ॥

यदा दृष्टो विक्रेता न्यायेन पराजितः स राज्ञे दण्डं स्वामिने द्रव्यं च दद्यात् । तदाह—

विक्रेता दर्शितो यत्र हीयते व्यवहारतः ।
क्रेत्रे राज्ञे मूलदण्डौ प्रदद्यात्स्वामिने धनम् ॥

मूलभूतं वा(१) क्रेतुर्देशान्तरगमने कात्यायनः—

मूलानयनकालश्च देयो योजनसंख्यया(२) ।
प्रकाशं[वा]क्रयं कुर्यात् साक्षिभिर्ज्ञातिभिस्सह ॥
न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी ।
प्रसाधिते क्रये राज्ञा वक्तव्यः सन्निधिं नच ॥
अथ मूलमनाहार्यं प्रकाशक्रयशोधितम् ।
अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥
( मनु. ८-२०२ )

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥
स्वामी दत्त्वार्धमूल्यं तु प्रगृह्णीत स्वकं धनम् ।
अर्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः ॥
अविज्ञातक्रयो दोषस्तथा च परिपालनम् ।
एतत्सर्वं समाख्यातं द्रव्यहानिकरं बुधैरिति ॥

---

( १ ) 'मूलभूतो विक्रेता देशान्तरं गतस्तदे' ति वी० मि० ।

( २ ) योजनान्ते मूलधने स्थिते सति तदानयनकालो यावान् ततो द्विगुणः योजनद्वयान्तस्थिताऽऽनयनार्थमित्येवमादिप्रकारेणेति भावः ।

अस्वामिविक्रेतुरिव स्वाम्यदत्तमुपभुञ्जानस्य दण्डमाह नारदः(?)—

उच्छिष्टमेव भोक्तव्यं स्त्रीपशुर्वसुधाऽपि वा ।
अनर्पितं तु यो भुङ्क्ते भुक्तभागं प्रदापयेत् ॥
अनिर्दिष्टं तु यद्द्रव्यं वासः(सप)क्षेत्रगृहादिकम् ।
स्वबलेनैव भुञ्जानश्चोरवद्दण्डमर्हति ॥
अनड्वाहं तथा धेनुमश्वं दासं(नं) तथैव च ।
अनिर्दिष्टं तु भुञ्जानो दद्यात्पणचतुष्टयम् ॥
दासी नौका तथा धुर्यौ बन्धकं नोपयुज्यते ।
उपभोक्ता तु त(य)द्द्रव्यं पणयेनैव विशोधयेत् ॥
दिवसे द्विप(गु)णां दासीं धेनुमष्टपणां दिने ।
उलूखले पणार्धं तु मुसलस्य पणद्वयम् ।
शूर्पस्य च पणार्धं तु जैमिनिर्मुनिरब्रवीत् ॥ इति ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलंकृतः ॥
श्रीमद्वल्लभ सूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि चतुरे श्रीमान्दलाधीश्वरः ॥ १ ॥
निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥ ७ ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीमन्म-हाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारेऽस्वामिविक्रयाख्यं व्यवहारपदम् ।

# अथ विक्रीयासंप्रदानं विवादपदमुच्यते ।

तत्स्वरूपमाह नारदः—

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते(१) ।
लोकेऽस्मिन्द्विविधं द्रव्यं स्थावरं जङ्गमं तथा ।
क्रयविक्रयरूपेण(२)सर्वन्तत्पण्यमुच्यते ॥

( ना. स्मृ. विक्री. २ )

षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः ।

इति । पण्यं षड्विधं—गणितं, तुलितं, मेयं क्रियापरीक्षितं, नाणकपरीक्षितं, गुणविभूतिश्रिया परीक्षितश्चेति । तथाहि—पूगफलादि गणितं गृह्यते दीयते च । तुलितं च सुवर्णरजतमञ्जिष्ठाखर्जुरादिकं तुलया गृह्यते दीयते च । मेयं च सर्वधान्यं माप्येन गृह्यते दीयते । तथा बलीवर्दादि वाहनादि क्रियापरीक्षितं(दर)गृह्यते दीयते च । स्त्री युगं कम्बलनाणकादिकं स्वरूपपरीक्षितं गृह्यते दीयते च । तथा वज्रवैडूर्यपद्मरागादिकं गुणविभूतिश्रिया परीक्षितं [ दीयते ] गृह्यते च इति । षड्विधमपि पण्यं दानादानविधिविषयतां प्रतिपद्यते । षड्विधं चेदं पण्यं षट्प्रकारमपि चेदं विक्रीयाददन्दाप्यः ।

---

( १ ) अत्र 'विक्रीयासम्प्रदानं तद्विवादपदमुच्यते' ( ना. स्मृ. विक्री. १ ) इत्युत्तरार्धो न्यूनः ।

( २ ) धर्मेष्विति ना. स्मृ. पा. ।

तदाह योगी—

गृहीतमूल्यं यद्द्रव्यं क्रेतुर्नैव प्रयच्छति ।

सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिनागते ॥ इति ।

( याज्ञ. २–२४४ )

नारदः—

विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति ।

स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥

( ना. स्मृ. विक्री. ४ )

स्थावरस्य गृहक्षेत्रादेर्जङ्गमस्य गोवृषादेः । क्षयशब्देन भोगः । क्रियाफलं यद्विभाव्यते । तथा—

अर्घश्चेदपहीयेत सोदयं पण्यमावहेत् ।

स्थायिनामेष नियमो दिग्भागे दिग्विचारिणाम् ॥

( ना. स्मृ. विक्री. ५ )

विष्णुना तस्य दण्डोऽभिहितः 'गृहीतमूल्यं क्रेतुर्यो न दद्यात् स दाप्य' इति ।

कात्यायनः—

क्रीत्वा प्राप्तं न गृह्णीयात् यो न दद्याददूषितम् ।

स मूल्याद्दशभागं तु दत्वा स्वं द्रव्यमाप्नुयात् ॥

अप्राप्तेऽर्थे क्रियाकाले कृतं नैव प्रदीयते ।

एवं धर्मो दशाहात्तु परतोऽनुशयेन तु ॥ इति ।

अदूषितं जलादिनेति शेषः । दोह्यवाह्यादिपण्यस्य दोहन-वाहनादिकालोऽर्थक्रियाकालस्तस्मिन् ग्रहणादानयोः कृतयोः दशम-

भागं न प्रदापयेत्। किन्तु तमदत्त्वैव स्वं(सं) द्रव्यमवाप्नुयात्। अयं धर्मो दशाहात् प्रागेव ज्ञेयः। अतः परमनुशयो न कार्यः।

योगी विशेषमाह—

देवराजोपघातेन पण्ये दोषमुपागते।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः॥
याचितइत्युक्ते ऽयाचिते दोष इत्यभिसंहितम्।

तदाह नारदः—

निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति।
सोऽपि तद्द्विगुणं दाप्यो विनयं तावदेव तु॥

(ना. स्मृ. विक्री. ७)

यद्यविक्रीयाऽविक्रीतं पण्यं सद्य एव क्रेतुर्न दद्यात् तद्यदि सलिलादिनोपहन्येत तदा सर्वोऽप्यनर्थो विक्रेतुरेव न क्रेतुरिति।

तदुक्तं—

उपहन्येत वा पण्यं दह्येतापह्रियेत वा।
विक्रेतुरेव सोऽनर्थो विक्रीयासम्प्रयच्छतः॥

(ना. स्मृ. विक्री. ६)

यथा याचितस्याप्रयच्छतो विक्रेतुर्हानिस्तथा दीयमानपण्यमगृह्णतः क्रेतुरपि हानिः स्यात्। तदुक्तम्—

दीयमानं न गृह्णाति क्रीतं पण्यं च यः क्रयी।
स एवास्य भवेद्दोषो विक्रेतुर्वाऽप्रयच्छतः॥ इति।

तथा योगी—

विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति।

हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥ इति ।

( याज्ञ. २–२५५ )

किञ्च—

निर्दोषं दर्शयित्वा तु यः सदोषं प्रयच्छति ।
मूल्यात्तद्द्विगुणं दाप्यो विनयं तावदेव च ॥ इति ।

( ना. स्मृ. विक्री. ७ )

तथा—

अन्यहस्ते [ च ] विक्रीय योऽन्यहस्ते प्रयच्छति ।
सोऽपि तद्द्विगुणं दाप्यो विनयं च तथैव चेति ॥

( ना. स्मृ. विक्री. ८ )

दीयमानं न गृह्णाति क्रीतं पण्यस्य यः क्रयी ।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ॥ इति ।

( ना. स्मृ. विक्री. ९ )

दत्तमूल्य(स्वल्प)स्य पण्यस्य विधिरेष प्रकीर्तितः ।
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः ॥ इति ।

( ना. स्मृ. विक्री. १० )

तस्माद्देशे च काले च वणिगर्थं निरूपयेत् ।
न जिह्मेन प्रवर्तेत श्रेयानेवं वणिक्पथः ॥ इति ।

( ना. स्मृ. क्री. ११ )

तथा—

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।
अस्वतन्त्रेण मूढेन पण्यं तस्य पुनर्भवेत् ॥

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलंकृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि विशदे श्रीमान्दलाधश्विरः॥१॥
निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे विक्रीयासम्प्रदानं नाम [व्यवहारपदम्] ।



## अथ क्रीत्वानुशयाख्यं चतुर्भेदं विवादपदमभिधीयते।

क्रीत्वा मूल्येन यः पण्यं क्रेता न वहु मन्यते ।
क्रीत्वानुशय इत्येतद्विवादपदमुच्यते ॥

( ना. स्मृ. क्री. १ )

यत्र पण्यं क्रीत्वानुशयः दुष्क्रीतमिदमिति विकल्प उत्पद्यते तत्क्रीत्वाऽनुशयं नाम । तथाहि—

क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्यविक्षतम् ॥

( ना. स्मृ. क्री. २ )

द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमाहरेत् ।
द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तु ॥ इति ।

( ना. स्मृ. विक्री. ३ )

ततश्च क्रीत्वानुशया[प]नुत्त्यर्थं क्रेता क्रयात् प्रागेव सम्यक् परीक्षां कुर्यात् । तदुक्तम्—

क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः ।
परीक्षाभिमतं क्रीतं विक्रेतुर्न भवेत् पुनः ॥ इति ।

( ना. स्मृ. क्री. ४ )

परीक्षाभिमतो निर्णयकालः—

त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु ।
दशाहात् सर्वबीजानामेकाहाल्लोहवाससाम् ॥

दोह्यं गोमहिष्यादि दिवसत्रयमध्ये परीक्षायामनिर्व्यूढं चलति । तथा वाह्यं बलीवर्दाश्वादिकं पञ्चाहात् । मुक्तावज्रप्रवालानां

सप्ताहात् परीक्षणम्। अनिर्व्यूढपरीक्षाणां प[दा]र्थानां प्रत्यर्पणा-
कालः प्रत्येकमभिहितो नोपरिष्टादित्यर्थः।

नारदः—

परिभुक्तं तु यद्वासः क्लिष्टरूपं मलीमसम्।
सदोषमेव(१)तत्क्रीतं विक्रेतुर्न भवेत्पुनः॥

(ना. स्मृ. क्री. ७)

त्र्यहाद्दोह्यं [ परीक्षेत पञ्चाहाद्वाह्यमेव तु ]
मणिमुक्ताप्रवालानां सप्ताहात् स्यात् परीक्षणम्॥

(ना. स्मृ. क्री. ५)

द्विपदामर्धमासात्स्यात् पुंसां तद्द्विगुणं स्त्रियः।
दशाहात् सर्वबीजानामेकाहाल्लोहवाससाम्॥ इति।

(ना. स्मृ. क्री. ६)

निर्दोषविचारितक्रीत(क्रान्तं)स्य दोषदर्शनाद्वलनं(?) स्यात्।
दृष्टज्ञातदोषक्रीतस्य तु वस्त्रस्य ततोदोषाद्वलन न स्यात्।

मूल्याष्टभागो हीयेत सकृद्धौ(द्वै)तस्य वाससः(?)।
द्विः पादस्त्रिस्त्रिभागस्तु चतुः(सकृत्)कृत्वोऽर्धमेव तु॥

(ना. स्मृ. क्री. ८)

तथा च—

अर्धक्षयात्तु परतः पादांशा(शो)पचयः क्रमात्।

---

(१) सदोषमपीति ना. स्मृ. पा.।

थावत् क्षीणादशं जीर्णं जीर्णस्यानियमः क्षये ॥

( ना. स्मृ. क्री. ९ )

इति द्वितीयो भेदः ।

लोहानामपि सर्वेषां हेतुरग्निक्रियाविधौ ।

संक्षयः स्तूयमानानां तेषां दृष्टोऽग्निसङ्गमात् ॥

( ना. स्मृ. क्री १० )

सुवर्णरजतताम्रकांस्यत्रपुसीसकादीनां(दानं) सर्वेषां विकारसंस्कारा अग्नेरेव दृष्टाः । अग्निसंयोगेन हि स्वकीयानुसारेण क्षयः ।

सुवर्ण[स्य] क्षयो नास्ति रजते द्विपलं शतम् ।

शतमष्टपलं ज्ञेयं क्षयः स्यात्त्रपुसीसयोः ॥

( ना. स्मृ. क्री. ११)

ताम्रे पञ्चपलं ज्ञेया(ये) विकारा ये च तन्मयाः ।

तद्धातूनामनेकत्वादयसोऽनियमः क्षये ॥

( ना. स्मृ. क्री. १२ )

इति तृतीयभेदः ।

तान्तवानां तु संस्कारे क्षयवृद्धिरुदाहृता(१) ।

सू(त)त्रकार्पासिकोर्णानि वृद्धिर्दशपलं श(स्मृ)तम् ॥

( ना. स्मृ. क्री. १३ )

स्थूलस्तंतुवता(२)मेषां मध्यानां पञ्चकं शतम् ।

---

( १ ) क्षयवृद्धी उदाहृते इति ना. स्मृ. पा. ।

( २ ) स्थूलसूत्रवतां तेषामिति ना. स्मृ. पा. ।

त्रिशतं तु सुसूक्ष्माणामतः क्षय उदाहृतः(१) ॥

( ना॰ स्मृ॰ क्री॰ १४ )

त्रिंशांशो रोमबद्धस्य क्षयः कर्मकृतस्य च ।
कौशेयवल्कलानां च नैव वृद्धिर्न च क्षयः ॥

( ना स्मृ॰ क्री॰ १५ )

तत्र रोमबद्धस्य कर्मकृतस्य स्वस्तिकपुष्पादिविचित्रकर्मकृतस्य त्रिंशांश एव क्षयो दृष्टः ।

क्रीत्वा नानुशयं कुर्यात् वणिक् पण्ये विचक्षणः ।
क्षयं वृद्धिं च जानीयात् पण्यानां यस्य यादृशी(२) ॥

( ना॰ स्मृ॰ क्री॰ १६ )

एवंविधसंस्कृतवस्तूनां क्रीत्वानुशयो न कार्यः । तथाह कात्यायनः—

अविज्ञातन्तु यत्क्रीतं दुष्टं यच्च द्विभावितम् ।
क्रीतं तत्स्वामिने देयं पण्यं क्रीत्वाऽन्यथा न तु ॥

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयालङ्कृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।
सारेऽस्मिन्व्यवहारनाम्नि चतुरे श्रीमान्दलाधीश्वरः ॥१॥

---

(१) त्रिपलं तु सुसूक्ष्माणामे । वृद्धिरुदाहृतेति ना॰ स्मृ॰ पा॰ ।

(२) वृद्धिक्षयौ तु जानीयात् पण्यानामागमं तथा इति ना॰ स्मृ॰ पा॰ ।

निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन्संपूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्म-हाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे क्रीत्वानुशयाख्यं व्यवहारपदम् ।

## अथ संविद्व्यतिक्रमाख्यं विवादपदमभिधीयते ॥

तत्र संवित्समयः परिभाषिकधर्मेण व्यवस्थानं तस्यातिक्रमः । तदाह नारदः—

पाखण्डनैगमादीनां स्थितिः समय उच्यते ।
समस्यानपाकर्म तद्विवादपदं स्मृतम् (ना.स्मृ.सम. १)इति ॥

तपोधनप्रव्रजितानां वोपदेश(?)रूपधारिणः दम्भजीवनिकाः पाखण्डाः । नैगमाः ( नैगमा ? ) वाणिज्यनिगमकारिणः(१) । एवमादीनां यः समयस्तस्यानपाकरणं रक्षणं यत्र विहितं तत्समयानपाकर्म विवादपदं ज्ञेयम् । तदुक्तं गुरुणा—

( १ ) 'नैगमाः सार्थिका वणिज इति मदनरत्ने । वेदप्रामाण्याभ्युपगन्तारः [ आप्तप्रणीतत्वेन ] पाशुपतादय इति मिताक्षरायाम्'मिति वी. मि. ।

वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥

यथा योगिनापि—

राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु ।
त्रैविद्यान् वृत्तिमद् (ता) ब्रूयात् स्वधर्मः पाल्यतामिति ॥

( याज्ञ. २–१८५ )

ब्राह्मणव्रातं वेदत्रयसम्पन्नं भूहिरण्यादिसम्पन्नं कृत्वा स्वधर्मो वर्णाश्रमनिष्ठधर्मः श्रुतिस्मृत्युदितो भवद्भिरनुष्ठीयतामिति राजा तान् ब्रूयात् । गुरुणा वृत्तिरपि दर्शिता—

अनाच्छेद्यकरास्तेभ्यः प्रदद्यात्(?) गृहभूमयः ।
भुक्ता भाव्याश्च नृपतिर्लेखयित्वा स्वशासनम् ॥
नित्यं नैमित्तिकं कार्यं शान्तिकं पौष्टिकं तथा ।
पौराणां कर्म कुर्युस्ते संदिग्धे निर्णयं तथेति ॥

[ अनाच्छेद्यकराः ] आगामिनृपतिभिरग्राह्यकराः । तथाह योगी—

निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥

( याज्ञ. २–१८६ )

ग्रामादिसर्वसमुदायानां हि साधारणं कार्यं गुरुणोक्तम्—

ग्रामश्रेणीगणानां च सङ्केतः समयक्रिया ।
बाधकाले तु सा कार्या धर्मकार्ये तथैव च ॥
वाटचोरभये बाधा सर्वसाधारणी स्मृता ।
तत्रोपशमनं कार्यं सर्वैर्नैकेन केनचित् ॥

धर्मकार्यं दुःसाध्यम् । सामवायिकी समयक्रिया सर्वैर्मिलितैः कार्या । वाटो वटः (!)एवं कृत्वा समयक्रिया न केवलं समुदायिभिरेव पालनीया अपि [तु] राज्ञाऽपि । तदाह नारदः—

पाखण्डनिगमश्रेणीपूग(व)व्रातगणा(समा)दिषु ।
संरक्षेत्समयं राजा दुर्गे जनपदे तथा ॥

( ना॰ स्मृ॰ सम॰ २ ) इति ॥

पाखण्डा वेदोक्तलिङ्गधारिव्यतिरिक्ताः सर्वे लिङ्गिनः । तेषु मत्स्यादिभिक्षा(?)चरणाद्याः समयाः संति । नैगमाः सार्थिका वणिक्प्रभृतयः०। [श्रेणयः] पण्यशिल्पोपजीविनः कुविंदादयः । तास्वनयैव श्रेण्या विक्रेयमित्यादिकाः सन्ति समयाः। पूगा हस्त्यश्वाऽऽरोहकादयः । नानायुधधरा व्राताः । कुलसमूहो गणः ।

कात्यायनः—

समूहानां तु यो धर्मस्तेन धर्मेण ते सदा ।
प्रकुर्युः सर्वकर्माणि स्वधर्मेषु व्यवस्थिताः ।

स्मृतिः—

कोशेन लेख्येन मध्यस्थैश्च परस्य च(१) ।
विश्वासं प्रथमं कृत्वा कुर्युः कार्याण्यनन्तरमिति ॥

मध्यस्थैःसाक्षिभिः । समूहकार्यकारिणः के के कर्त्तव्याः के च परित्याज्या इत्याह बृहस्पतिः—

विद्वेषिणो व्यसनिनः शालीनालसभीरवः ।
लुब्धातिवृद्धबालाश्च न कार्याः कार्यचिन्तकाः ॥

---

( १ ) कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परमिति प. मा. ।

शुचयो वेदधर्मज्ञाः दक्षा दान्ताः कुलोद्भवाः ।
सर्वकार्यप्रवीणाश्च कर्त्तव्यास्तु महत्तमाः ॥
द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः ।
कर्त्तव्यं वचनं तेषां ग्रामश्रेणीगणादिभिरिति ॥

समूहहितवादिवचनातिक्रमकारिणां दण्ड उक्तो योगीश्वरेण—

कर्त्तव्यं वचनं सर्वैः समूहहितवादिनाम् ।
यस्तत्र विपरीतः स्यात् स दाप्यः प्रथमं दमम् ॥

( याज्ञ॰ २–१८८ ) इति ।

तेषामपि अधर्मद्वेषादिना कार्यानुष्ठाने दण्डः । किं च—

मुख्यैः सह समूहानां विसंवादो यदा भवेत् ।
तदा विचारयेद्राजा स्वमार्गे स्थापयेच्च तानिति ॥

मुख्यस्य समूहद्रव्यापहारे दण्डः—

गणद्रव्यं हरेद्यस्तु संविदं लङ्घ (लेख)येच्च यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥

( याज्ञ॰ २–१८७ )

एतच्चानुबन्धबाहुल्ये द्रष्टव्यम् । तदल्पत्वे तु मनूक्तं द्रष्टव्यम्—

निगृह्य दापयेदेनं समयव्यभिचारिणम् ।
चतुःसुवर्णं षण्निष्कं शतमानं च राजतम् ॥

( मनु॰ ८–२२० )

एतत्त्रयं जातिशक्त्याद्यपेक्षया कल्पनीयम् । समूहद्रव्यापहरिणं प्रत्याह योगी—

समूहकार्यप्रहितो यो लभेतांशुकादिकम्(१) ।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम् ॥

( याज्ञ॰ २–१९० )

समुदायभेत्तारो दण्ड्याः—

पृथग्गणांश्च ये भिन्द्युस्ते नियम्या विशेषतः ।
आवहेयुर्भयं घोरं व्याधिवत्ते ह्युपेक्षिताः ॥ इति ।

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगलसरोरुहभ्रमरसकलभूमण्डलमण्डन-समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्म-हाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे संविद्व्यतिक्रमाख्यं व्यवहारपदम् ।

---

(१) [illegible]

## अथ सीमानिर्णयः क्रियते ॥

सा च सीमा चतुर्विधा जनपदसीमा ग्रामसीमा क्षेत्रसीमा गृहसीमा चेति । सापि यथायथं पञ्चविधा । तदाह परमर्षिः—

ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता ॥

ननु रूढितः मर्यादा सीमा । तत्र विवाद एव न भवति । सत्यम् । भवत्येवात्र विवादो देशभङ्गापराधात् । एककुलदेशान्तरगमनाद्वा भुक्तिविच्छेदो जायते । यद्वा परकीयमेव क्षेत्रादिकं लाभभ्रमाभ्यां कश्चिदपेक्षते इति भवत्येव सीमासम्बन्धो विवादः । अत्र च ग्रामवृद्धाः कृषिजीविनो वा ग्रामबहिःस्थिता व्याधादयो वा निर्णायकाः । तत्र तासां लक्षणानि—

वृक्षादिलक्षिता ध्वजिनी । जललिङ्गान्विता मत्स्यिनी । चिह्नाभावे राजशासननीता राजेच्छया निर्मिता । नैधानी निखाततुषाङ्गारादिमती । तेषां निखातताया निधानतुल्यता । भयवर्जिता अर्थिप्रत्यर्थिसम्प्रत्तिपतिनिमित्ता । तत्र—

ग्रामयोरुभयोस्सीम्नि वृक्षा यत्र समन्ततः ।
समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्तिता ॥
स्वच्छन्दगा बहुजला मत्स्यकूर्मसमन्विता ।
नित्यप्रवाहिनी यत्र सीमा सा मत्स्यिनी मता ॥
तुषाङ्गारकपालैस्तु कुम्भैरायतनैस्तथा ।
सीमाऽत्र (प्रति)चिह्निता कार्या नैधानी सा निगद्यते॥इति ।

वृक्षा न्यग्रोधादयः ।

वापीकूपतडागादि चैत्यारामसुरालयाः ।
स्थलं निम्नं नदी स्रोतः शरगुल्मनगादयः ॥
सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीशालतालांश्च क्षीरिणश्चैव पादपान् ॥

( मनु० ८–२४६ )

प्रकाशचिह्नान्येतानि सीमायां कारयेत्सदा ।

तत्र षोढा विवादः । आधिक्येन न्यूनभावेन अस्तिनास्तिभावेन अभोगभुक्त्या सीमामर्यादया चेति । तथाहि—अत्र मम दशनिवर्तनाधिका भूमिरस्तीति एकेनोक्ते अपरो वदति पञ्चनिवर्त्तनैव नाधिकेति अधिकभावे । दशनिवर्त्तना मदीयभूमि[रित्युक्ते]न ततो-न्यूने[ति]न्यूनभावे । दशनिवर्त्तनो मदीयोंऽश इत्युक्तेंऽश एव नास्ति इति अस्तिनास्तिभावे। मदीया भूमिः प्रागविद्यमानभोगैव भुज्यते इत्य-भोगभुक्तौ। इयं वा मर्यादा इयं वेति सीमाविवाद इति षोढा विवादः।

आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च ।
अभोगभुक्तिः सीमा च षड् वादस्येह हेतव इति ॥

वस्तुतस्तु चतुर्धैव ।

तत्र च निर्णय उक्तचिह्नाभावे सत्सु वा चिह्नेषु साक्षिप्रभृतिभिः कर्त्तव्यः । साक्षिप्रत्ययाद्धि सीमानिर्णयाभावे ग्रामसीमांतवासिभिः सामन्तैः तदभावे तत्संसक्तैः । तदभावे मौलैर्वृद्धोद्धारकैः । तदभावे ततो वनगतैः व्याधशकुनिगोरक्षभूकर्षकप्रभृतिभिरिति । तदाह मनुः—

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः(१) ।

यदि संशय एव स्यात् लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्यात्सीमावादविनिर्णये ॥

(मनु. ८–२५३)

साक्ष्यभावे तु चत्वारो ग्रामाः सीमांत(१)वासिनः ।
सीमाया निर्णयं कुर्युः प्रजा वा(२)राजसन्निधौ ॥

(मनु. ८–२५८) इति

सामन्तास्तु—

संसक्तकास्तु सामन्ताः तत्संसक्तास्तथोत्तराः ।
संसक्तसक्तसंसक्ताः पद्मकाराः प्रकीर्तिताः ॥
स्वार्थसिद्धयै प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्संसक्तैस्तु कर्त्तव्य उद्धारो नात्र संशयः ।
तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः ॥

वृद्धाः स्थविराः ।

निष्पद्यमानं यैर्दृष्टं तत्कार्यं तद्गुणान्वितैः ।
वृद्धा वा यदि वाऽवृद्धास्ते तु वृद्धाः प्रकीर्तिताः ॥
ये तत्र पूर्वाः सामन्ता ये च देशान्तरङ्गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्तिताः ॥
उपश्रवण–संभोग–का(क्रा)र्याख्यानोपलक्षिताः ।
उद्धरन्ति पुनर्यस्मादुद्धृतास्ते ततः स्मृताः ॥
सामन्तानामभावे तु मौलानां सीमसाक्षिणाम् ।

(१) सामन्तेति मनु० पा० ।
(२) प्रयता इति मनु० पा० ।

इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ॥

( मनु ८-२५९ )

व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखानकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान् ॥

( मनु. ८-२६० )

तथा योगी—

सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थाविरादयः ।
गोपाः सीमाकृषाणाश्च सर्वे च वनगोचराः ।

( याज्ञ. २-१५० )

गोपा गोचारकाः । सीमाकृषाणाः सीमासन्निहितक्षेत्रकर्षकाः इति । सामन्तादयश्च संख्यागुणातिरेकेण जायन्ते । [त]थाच—

सामन्ताः साधनं पूर्वं निर्दोषाः स्युर्गुणान्विताः ।
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः ॥

तदत्र साक्षिप्रभृतयः सर्वेऽपि स्वैः स्वैः शपथैः शापिता एव सीमां नयेयुः । तथाच मनुः—

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिता स्वैः स्वैर्नयेयुस्ते समञ्जसम् ॥

( मनु. ८-२५६ ) इति ।

नयेयुरिति बहुवचनं द्वयोरेव निषेधं करोति नैकस्य । कुतः ? एकस्य तद्विधेर्नारदेन । तथाहि—

एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत् ।

रक्तमाल्यांबरधरो भूमिमादाय मूर्धनि ॥

( ना. स्मृ. सीमा. १० ) इति ।

ननु—

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।

गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥

( ना. स्मृ. सीमा. ६ )

इत्यत्र तेनैकस्यापि निषेधात्कथं द्वयोरेव निषेध उच्यते ? नायं विरोधो ह्ययं निषेधः उभयानुमतधर्मविद्द्वय(ध्य)तिरिक्तविषयः । ततः साक्षिप्रभृतिभिः सन्देहनिर्णयः कर्त्तव्यः । साक्षिलक्षणं तु गुरूक्तमनुसन्धेयम्—

आगमं च प्रमाणं च भोगं कालं च नाम च ।

भूभागलक्षणं चैव ये विदुस्तेऽत्र साक्षिणः ॥ इति ।

यदा तु चिह्नानामविद्यमानविद्यमानानामपि वा भङ्गितया सन्दिग्धत्वेनानिर्णायकता, तदा योगिनोक्त उपायः कर्त्तव्यः—

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशाऽपि वा ।

रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥

( याज्ञ. २–१५२ ) इति ।

स्थलादिचिह्नाभावे नारदोक्तो विशेषः—

निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु ।

तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनात् ॥

( ना. स्मृ. सीमा. ६ )

निम्नगा नदी । तस्याः अपहृतेन अपहारेण उत्सृष्टानि नष्टानि

स्वस्थानमच्युतानि चिह्नानि यासु मर्यादाभूमिषु तत्प्रदेशानुमानात् । दृष्ट्वा चिह्नं प्राचीनप्रदेशानुमानात् प्रमाणात्—ग्रामादारभ्य सहस्रदण्डपरिमितं क्षेत्रस्य पश्चिमो भागः—एवं लक्षणात्प्रमाणात् भोगदर्शनात् प्रत्यर्थिसमक्षमपि अस्मत्कालोपलक्षितभुक्तेर्भोगात् वा निश्चयं कुर्युः ।

*सीमा चंक्रमणे कोशे पादस्पर्शे तथैव च* ।

अयं च सीमानिर्णयस्त्रिपक्षपक्षसप्ताहकालेन राजदैविकव्यसनावधिः कर्त्तव्यः । तथा चाह कात्यायनः(१)—

त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते ॥

वाक्पारुष्ये महीवादे दिव्यानि परिवर्जयेत् ।

इति निषेधस्तूक्तलक्षणापुरुषाभावविषयः । तथान्यदपि मनूक्तमन्वेष्टव्यम्—

ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम् ।

निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥

( मनु. ८–२५५ ) इति ।

अनृतोक्तौ नारद आह—

अथ चेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये(२) ।

सर्वे पृथक् पृथक् दण्ड्याः राज्ञा मध्यमसाहसम् ॥

( ना स्मृ. सीमा. ७ )

---

( १ ) **चिह्नगतोऽर्थोऽत्रैवोपयुज्यते ।

( २ ) तद्विनिश्चये इति ना० स्मृ० पा० ।

तथाऽपरो विशेषः—

यदा तु न स्युर्ज्ञातारः सीमाया न च लक्षणम् ।
तदा राजा द्वयोः सीमामुन्नयेदिष्टतः स्वयम् ॥ इति ।

( ना. स्मृ. सीमा. ११ )

अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता(१) ।

( याज्ञ. २–१५३ ) इति ।

ज्ञातृसामन्तादिवृक्षादिचिह्नाभावे राजा मर्यादायाः प्रवर्त्तयिता । स च एवं निश्चयः, या ग्रामद्वयमध्यवर्त्तिनी विवादास्पदीभूता उभयत्रोपकारिणी सीमा सा समं विभज्य उभयोर्ग्रामयोर्देया । तन्मध्ये सीमालिंगानि च कर्त्तव्यानि । या च यदा एकस्यैव ग्रामस्य उपकारातिशयविशेषकारिणी सा ग्राम( कल्पि ? )भूः तस्यैव ग्रामस्य समर्पणीया । तदाह मनुः—

सीमायामविषह्यायां स्वयं राजैव धर्मवित् ।
प्रदिशेद् भूमिमेतेषामुपकारादिति स्थितिः ॥

( मनु. ८-२६५ ) इति ।

तथा—

सामंतभावे सामन्तैः कुर्यात् क्षेत्रादिनिर्णयम् ।
ग्रामसीमादिषु तथा तद्वन्नगरदेशयोः ॥ इति ।

निर्णयाऽकरणे दण्डः—

बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।

---

( १ ) प्रयच्छतीति 'क' 'ख' ।

कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥

विपरीतकरणेऽपि दण्डः—

यथोक्तेन नयेनैव(१)पूयन्ते सत्यसाक्षिणः ।

विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥

( मनु. ८—२५७ )

अज्ञानादनृतवदने साक्ष्यादीन्दण्डयित्वा पुनरपि विचारः प्रवर्त्तनीयः । तदाह कात्यायनः—

अज्ञानोक्ते दण्डयित्वा पुनः सीमां विचारयेत् ।

त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह ।

संमील्य कारयेत्सीमामेवं धर्मविदो विदुरिति ॥

नद्याद्युत्सृष्टक्षेत्रविषये गुरूक्तो निर्णयः—

अन्यग्रामात्समाहृत्य दत्तान्यस्य यदा मही ।

महानद्याऽथवा राज्ञा कथं तत्र विचारणा ॥

नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ।

अन्यथा न भवेल्लाभो नराणां राजदैविकः ॥

क्षयोदयौ जीवनं च दैवराजवशान्नृणाम् ।

तस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥

ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी ।

कुरुते दानहरणं भाग्याभाग्यवशान्नृणाम् ॥

एकत्र जलपात्रं तु भूमेरन्यत्र संस्थितम् ।

---

( १ ) नयन्तस्ते इति मनु० ।

नदीतीरे प्रकुरुते तस्य तन्न विचालयेत् ॥

एतदनुप्त(दा)सस्यविषयम् । उप्तसस्यविषये विशेषः—

क्षेत्रं ससस्यमुल्लंघ्य भूमिश्छिन्ना यदा भवेत् ।

नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम् ॥

राजदत्तेऽपि क्वचिदपवादः—

या राज्ञा क्रोधलोभेन छलेनान्येन वा हृता ।

प्रदत्तान्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥

आरामादिषु अयमेव निर्णयप्रकारः ।

तदाह—

आरामायतनग्रामनिपातोद्यान(भूमि?)वेश्मसु ।

एष एव विधिर्ज्ञेयः वर्षाम्बुप्रवहादिषु ॥

( याज्ञ. २—१५४ )

आरामःपुष्पफलोपचयहेतुर्भूभागः । आयतनं निवेशनं पलालकूटाद्यर्थं विभक्तो भूप्रदेशः । ग्रामः प्रसिद्धः । नगरोपलक्षणमेतत् । निपानं पानीयस्थानं वापीकूपादि । उद्यानं क्रीडार्था भूः वेश्म गृहमित्यादि । गृहादिविषये निर्णयः—

निवेशकालादारभ्य गृहवा(च)र्यापणादिकम् ।

येन वा यद्यथाभुक्तं तस्य तन्न विचालयेत् ॥

वातायनं (१)प्रणालीं च तथा निर्व्यूह(२) वेदिकाः ।

---

( १ ) ययेनेति 'क' 'ख' । स्मृ. चं. गतस्तूपरितनः ।

( २ ) निर्यूहेति स्मृ. चं. ।

चतुःशालं स्यन्दनिकः प्राङ्निष्टं (१) न विचालयेत् ॥

परगृहे इदं न कार्यम् । निर्व्यूहो गृहघोणावधि(२)रिति ।

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।

क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥

( याज्ञ. २-१५५ )

अनेकक्षेत्रव्यवच्छेदिका साधारणी भूर्मर्यादा । क्षेत्रग्रहणं गृहाद्युपलक्षणार्थम् ।

स्वीयभ्रान्त्या हरणे विशेषः—

गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ।

शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः ॥

( मनु. ८-२६४ )

तदाह—

(३)वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ।

तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥

( ना. स्मृ. साहस ८ )

सीमाव्यतिक्रमे त्वष्टसहस्रमिति शङ्खलिखिताभिहितं दण्डाधिक्यं समग्रसीमातिक्रमविषयम् । सीमासन्ध्युत्पन्नवृक्षादिविषये

---

( १ ) प्राङ्निविष्टं न चालयेदिति स्मृ. चं.।

( २ ) घोणा वेदिका इति स्मृ. चं.।

( ३ ) परक्षेत्रे तत्स्वाम्यनुज्ञया सेतुकूपादिकं निर्मातुमिच्छन् स्वामिना न निषेध्योऽन्यथा क्षेत्रस्वामिनो दण्ड इत्यर्थः ( मि० )।

कात्यायनः—

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः।
फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत्॥
अन्यक्षेत्रेषु जातानां शाखा यत्रान्यसंश्रिताः।
स्वामिनं तं विजानीयात् यस्य क्षेत्रेषु संश्रिताः॥

परक्षेत्रे प्रार्थनया क्रियमाणं सेतुकूपादिकं क्षेत्रस्वामिना…(१)

न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः॥

(याज्ञ॰ २–१५६)

सेतुश्च द्विविधो ज्ञेयः खेयो बध्यस्तथैव च।
तोयप्रवर्तनात्खेयो बध्यः स्यात्तन्निवर्तनात्॥

(ना॰ स्मृ॰ सीमा १८)

स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत्।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः॥

(याज्ञ. २–१५७)

अस्वाम्यनुमतेनैव सत्कार्यं कुरुते तु यः।
गृहोद्यानतडागानां संस्कर्ता लभते न तु॥

क्षेत्रस्वामिपार्श्वे क्षेत्रमिदमहं कृषामीति प्रतिज्ञाय स्वयं न कृषति अन्येन वा न कर्षयति तं प्रति—

फालाहतमपि क्षेत्रं यो न कुर्यान्न कारयेत्।

---

(१) परक्षेत्रे तत्स्वाम्यनुज्ञया सेतुकूपादिकं निर्मातुमिच्छन् स्वामिना न निषेध्योऽन्यथा क्षेत्रस्वामिनो दण्डः (मि.) इत्यर्थः।

स प्रदाप्यः कृष्टफलं (शतं) क्षेत्रमन्येन कारयेत् ॥

( याज्ञ. २–१५८ )

क्षेत्रं गृहीत्वा यः कश्चित् न कुर्यात् न च कारयेत् ।

स्वामिने स(न)शतं दाप्यो राज्ञे(ज्ञा)दण्डं च तत्सममिति ॥

दृष्टिबन्धं प्रणालीं च न कुर्यात् परवेश्मसु ।

परवेश्मनि मुख्ये ।

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरः प्रभुः ।

भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलंकृतः ॥

श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।

सारेऽस्मिन् व्यवहारनाम्नि चतुरे श्रीमान्दलाधीश्वरः ॥

निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।

श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे सीमानिर्णयः(१) ।



(१) ऋणादानमिति 'क' 'ख' ।

# अथ स्त्रीपुंसयोगाख्यं विवादपदमभिधीयते ।

तत्स्वरूपम्—

विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते ।
स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते ॥

( ना. स्मृ. स्त्रीपुं. १ )

मनुः—

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् ।
विषये सज्जमानाश्च संस्थाप्या ह्यात्मनो वशे ॥

( मनु. ९–२ )

स्त्रीपुंसयोगे पूर्वं वरणं पश्चात्पाणिग्रहणमिति द्वौ संस्कारौ । तदपि द्विधा क्वचिद्देशे दशपुरुषविख्यातकुलशीलरूपभ्रातृमती कन्या अत्यादरेण परिणयनाद्युपचारेण व्रियते । क्वचित्तु देशाचारेण वा प्रधानवरगुणावेक्षया वा शास्त्रोक्तप्रधानपुरुषप्रथमब्राह्मविवाहयज्ञ-पुण्योपार्जितार्थं वरस्यैव महतीं भाण्डमूल्यनानाऽलंकारदुकूलादिद-क्षिणामुपश्रुत्य वराय वा अत्यादरेण व्रियते । एवमुभयप्रकारमपि वरणं पाणिग्रहणात्पूर्वं विधेयम् । ततश्च

ब्राह्मणक्षत्रियविशां शूद्राणां च विशेषतः ।
स्वजातिः श्रेयसी भार्या स्वजातौ च वरः स्त्रियः ॥

( ना. स्मृ. स्त्रीपुं–४ )

मनुः स्त्रीरक्षणमनुवदति–"अस्वतंत्राः स्त्रियः कार्याः" ॥

( मनु. ९–२ ) इति ।

इमं हि सर्ववर्णानां पश्यतो धर्ममुत्तमम् ।
यतंते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥

( मनु. ९–६ )

स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ।
स्वं च धर्मं प्रजाश्चैव जाया रक्षन् हि रक्षति ॥

( मनु. ९–७ ) इति ।

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥

( मनु. ९–१० ) इति ।

कुलद्वयवृद्ध्यर्थं रक्ष्याः । यद्यपि प्रसह्यावरुद्ध्य रक्षितुमशक्यास्तथापि अर्थसंग्रहादौ नियोजनेन पुरुषांतरचिंतनावसराप्रदानेन रक्षेत् । तथा चाहुराचार्याः—"अतिप्रयत्नेन हि कुलीनाः परिरक्षंत्यात्मानं स्त्रीरक्षणमेवात्मरक्षणम् ।

जायायां रक्ष्यमाणायामात्मा भवति रक्षितः ।

इति स्मरणात्" । तथा गुरुरपि—

सूक्ष्मेभ्यो[ ऽपि प्रसङ्गेभ्यो ] निवार्या स्त्री स्वबंधुभिः ।
श्वश्र्वादिभिर्गुरुस्त्रीभिः पालनीया दिवानिशम् ॥

दोषरहिता स्त्री न त्याज्या ।

अनुकूलामवाग्दुष्टां [ दक्षां ] साध्वीं प्रजावतीम् ।
त्यजन्नारीमवस्थाप्यो राज्ञा दण्डेन भूयसा ॥

( ना. स्मृ. स्त्रीपुं. ९५ ) इति ।

आज्ञासम्पादि[नीं] दक्षां वीरसूं प्रियवादिनीम् ।

त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥

( याज्ञ. १--७६ )(१)

वसिष्ठः—

चतुसूस्तु परित्याज्याः शिष्यगा गुरुगा तथा ।

पतिघ्नी तु विशेषेण जुङ्गितोपगताऽपि वा ॥

तथा—"गर्भघ्नीमधमवर्णां शिष्यसुतगामिनीं पानव्यसनासक्तां धनधान्यविक्रयकरीं वर्जयेत्" । वर्जनं संव्यवहारपरित्यागः ।

व्यवाये तीर्थ[ग]मने धर्मेभ्यश्च निवर्त्तते । इति ।

व्यवायः संभोगः । [तीर्थ]गमनं स्मार्त्तकर्म । बोधायनः —

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।

मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥

संभोग इति शेषः ।

अनर्थशीलां सततं तथैवाप्रियवादिनीम् ।

पूर्वाशि[नी] च या भर्तुस्तां स्त्रीं निर्वासयेद् गृहात् ॥

अशुश्रूषाकरीं नारीं बन्धकीं पतिहिंसकाम् ।

त्यजन्ति पुरुषाः प्राज्ञाः क्षिप्रमप्रियवादिनीम् ॥

त्यागो वधस्य प्रतिनिधिः कर्त्तव्यो न वधः । कृन्तनं नासाकर्णयोर्वा ततो विसर्ग एव युक्तः ।

प्रौढश्रीद्विजराजवंशतिलकालंकारहीरप्रभुः ।

भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलंकृतः ॥

श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः ।

(१) 'द्रव्यैराभरणैः स्त्रियः' इति 'क' 'ख' ।

सारेऽस्मिन् व्यवहारनाम्नि विशदे श्रीमान्दलाधाश्वरः॥१॥

निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन्सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे स्त्रीपुंसयोगाख्यं व्यवहारपदम् ॥



## अथ स्त्रीसंग्रहणाभिधेयं विवादपदमभिधीयते ।

तत्रोपायमाह योगी—

पुमान् संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया ।
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥

( याज्ञ. २–२८३ )

नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् ।
अदेशकालसम्भाषा सहैकस्थानमेव च ॥

( याज्ञ. २–२८४ )

अयमत्र योगीश्वराभिप्रायो लक्ष्यते—स्त्रीपुंसयोर्मिथुनीभावः संग्रहणम् । तत्र प्रवृत्तः परभार्यया सह केशाकेशि क्रीडनेन सद्यः

अभिनवैः कामजैः करुहदशनादिकृतव्रणलिङ्गैर्द्वयोः सम्प्रतिपत्त्या ग्राह्यः। योऽपि परदारपरि(र)धानग्रन्थिप्रदेश(शि)कुचमावरण-जघन-शिरोरुहादिस्पर्शनं साभिलाष इव करोति निर्जनदेशे जनाकीर्णेऽन्धकाराकुले संलापं करोति सोऽपि ग्राह्यः। तथा मनुरप्याह—

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया।
परस्परस्यानुमते सर्वं सङ्ग्रहणं स्मृतम्॥

(मनु ८-२५८)

द्वेषाद्वा यदि वा मोहात् छ्लाघ्यो वा स्वयं वदेत्।
पूर्वं मयेथं भुक्तेति तच्च सङ्ग्रहणं स्मृतम्॥

तत्राह दण्डं योगीश्वरः—

अज्ञानात्(१) उत्तमो दण्डः आनुलोम्ये तु मध्यमः।
प्रातिलोम्येऽधमः पुंसो नार्याः कर्णादिकर्तनम्॥

(याज्ञ० २-२८६)

चतुर्णामपि वर्णानां बलात्कारेण सजातीयगुप्तपरभार्यागमने साशीतिपणसाहस्रो दण्डः। यदा त्वानुलोम्येन हीनवर्णगुप्तपरभार्यागमनं तदा मध्यमसाहसो दण्डः। यदा तु सवर्णामगुप्तामानुलोम्येन गुप्तां वा व्रजति ब्राह्मणः सहस्रं दण्ड्यः, इच्छन्त्या सङ्गतः पंचशतं दण्ड्यः। गुप्ते क्षत्रियवैश्यभार्ये व्रजन् ब्राह्मणः सहस्रं दण्ड्यः। क्षत्रियवैश्ययोश्च शूद्रायां सहस्रो दमः। इदं हि गुरुसखिभार्यादिव्यतिरिक्तविषयम्। तत्र नारदेन दण्डान्तरविधेः।

(१) स्वजातौ इति याज्ञ० पा०।

मातृ-मातृ[भ]गिनी-श्वश्रू-मातुलानी-पितृभगिनी-पितृव्यपत्नी-सखिभार्या-शिष्यस्त्री-भगिनी-स्तत्सखी-स्नुषा-कन्या-आचार्यभार्या-सगोत्रा-शरणागता-प्रव्रजिता-धात्री-वर्णोत्तमा-साध्वीगमने गुरुतल्पग-व्रतं शिश्नोत्कर्तनमेव दण्डः। प्रातिलोम्येनोत्कृष्टस्त्रीगमने क्षत्रिया-देर्वधः कटाग्निना दाहो वा कर्त्तव्यः। क्षत्रियवैश्ययोरगुप्तब्राह्मणी-गमने सहस्रं पञ्चशती वा दण्डः। ब्राह्मणस्य क्षत्रियवैश्ययोर्या स्त्री तयाऽगुप्तया सह शूद्रस्य सम्बन्धे लिङ्गच्छेदसर्वस्वहरणे। गुप्तागमने वधसर्वस्वहरणे। क्षत्रियवैश्ययोरन्योन्यस्याभिगमने यथाक्रमं सहस्रपञ्चशतात्मको दण्डः। तथा,

(१)शस्त्रं द्विजातिभिर्ग्राह्यं यत्र धर्मोऽपरुध्यते।

(मनु ८–३४८)

न तत्रारिवधे (२)दोषो हन्तुर्भवति कश्चन।
प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति॥

(मनु ८–३५१) इति।

साधारणस्त्रीगमने दण्डः—

अवरुद्धासु दासीसु भुजिष्यासु तथैव च।

---

(१) अत्र 'अयं वधाद्युपदेशो राज्ञ एव न ब्राह्मणस्य, तस्य शस्त्रग्रहणनिषेधात्। यत्र तु राज्ञः प्रतीक्षणे कालातिपातादि, तत्र ब्राह्मणोऽपि शस्त्रमाददीत' (वी. मी.) इत्यर्थकः कश्चिद् ग्रन्थो न्यूनः तं विना प्रकृतग्रन्थासङ्गतेः।

(२) नाततायिवधे इति मनु० सं० पा०।

गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणकं दमम् ॥

( याज्ञ० २—२६० ) इति ।

या दास्यो गृह एव स्थातव्यमिति शुश्रूषाव्युदासार्थं स्वामिना पुरुषान्तरभोगतो निरुद्धाः अवरुद्धाः नियतपुरुषपरिग्रहा वा भुजिष्याः । तत्र गम्यासु गच्छन् पञ्चाशत्पणो दण्डः । परपरिगृहीतायाः तस्याः परदारतुल्यत्वात् । तदाह नारदः—

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासनी च या ।
गम्याः स्युरानुलोम्येन [स्त्रियो न]प्रतिलोमतः ॥

( ना० स्मृ० स्त्रीपुं० ७८ )

आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत् ।
गम्यास्वपि हि नोपेयात् यतस्ताःसपरिग्रहाः ॥

( ना० स्मृ० स्त्रीपुं० ७६ ) इति(१) ।

तत्र स्वैरिणी अविद्यमानपितृपुत्रभ्रातृबन्धुपुंश्चली । अब्राह्मणी क्षत्रियाद्या । वेश्या पण्ययोषित् गणिका । दासी गृहजातिशुचिकर्मकरी । सा च निष्कासिन्यपगूढा । एता गम्याः । निष्कासिनी स्वाम्यनवरुद्धा । अनवरुद्धदास्यभिगमने दशपणो दण्डः । पुरुषसम्भोगजीविकासु स्वैरिण्यादिदासीषु शुल्कदानं विना बलात्कारेणाभिगच्छतो दशपणो दण्डः । अनिच्छन्तीमेकां प्रति बहूनां गच्छतां चतुर्विंशतिपणात्मको दण्डः । विवाहयोग्यां कन्यामपहरन्नुत्तमसाहसं दण्ड्यः । प्रातिलोम्येन हरणे वधः । आनुलोम्येन सकामामपहरन् दण्डभाक् । अकामामपहरन् प्रथमसाहसं

(१) 'गम्या अपि हि नोपेया यत्ताः परपरिग्रहा' इति ना० स्मृ०पा० ।

दण्डनीयः । योऽकामां सजातीयां कन्यां बलान्नखक्षतादिना दूषयति तस्य करच्छेदः । उत्तमादूषणे वधः । कन्याया विद्यमानापस्मारादिना दूषणे पणशतं दण्ड्यः । अविद्यमाने दूषणे द्विशतं दण्डः । यः कन्यामकामामङ्गुलिप्रक्षेपेण योनिक्षतं कुर्वन् दूषयति तदङ्गुल्योश्छेदः षड्शतं दण्डः । सकामां दूषयन्तं द्विशतं दण्डः । कन्यैव कन्यां दूषयति तदा द्विशतं दण्डः । उत्तमकन्यागमने तत्पित्रे गोमिथुनं शुल्कं देयम् । अनिच्छति पितरि दण्डो राज्ञे । अकामगमने वधः । अन्त्यजचण्डालीगमने सहस्रं दण्डः । उक्तं प्रायश्चित्तम् । तदभावेन भगाङ्कनेन निर्वास्यः । शूद्रोऽन्त्यज एव स्यात् । गोगमने मध्यमसाहसं दण्डः । गोव्यतिरिक्तपशुगमने पणशतम् । कश्चिद्विशेषः—

अनुत्पन्नप्रजायास्तु पतिः प्रेयाद्यदि स्त्रियाः ।
नियुक्ता गुरुभिर्गच्छेद्देवरं पुत्रकाम्यया ॥

( ना. स्मृ. स्त्रीपुं. ८० )

स च तामभिगच्छेत्तु तथैवाऽऽपुत्रजन्मनः ।
पुत्रे जाते निवर्त्तेत विप्लवः स्यादतोऽन्यथा ॥

( ना. स्मृ. स्त्रीपुं. ८१)

अयमर्थः—देवरेण प्रवर्त्तितव्यम् । आपुत्रजन्मनः । पुत्रे जाते परिहार्या । अन्यथा विप्लवः संकरः स्यात् । प्रवृत्तिप्रकारः—

घृतेनाभ्यज्य गात्राणि तैलेनासंस्कृतेन वा ।
आस्येनास्यं परिहरन् गात्रैर्गात्राण्य(णि)संस्पृशन् ॥

( ना. स्मृ० स्त्रीपुं. ८२ ) इति ।

किञ्च—

स्त्रियं पुत्रवतीं वन्ध्यां नीरजस्कामनिच्छतीम् ।

( ना. स्मृ. स्त्रीपुं. ८३ )

न गच्छेद्गर्भिणीं निन्द्यामनियुक्तां च बंधुभिः ।

( ना. स्मृ. स्त्रीपुं. ८४ )

नन्वनुत्पन्नप्रजाया वचनादनुक्तोऽपि पुत्रवत्याः प्रतिषेधो भविष्यति, सत्यम्। पुत्रवत्याः प्रतिषेधादेवं जानीमः, दुहित्रपत्ये सत्यपि अभिगन्तव्यमेवेति। मूलवाक्ये प्रजाशब्दः पुत्रवाची। सत्यपि निषेधे गमने पारदारिकदोषः स्यात् ।

अनियुक्ता तु या नारी देवराज्जनयेत्सुतम् ।

( ना. स्मृ. स्त्रीपुं. ८४ )

जारजातमरिक्थीयं तमाहुर्ब्रह्मवादिनः ।
तथाऽनियुक्तो यो भार्यां यवीयाञ्ज्यायसो व्रजेत् ॥

( ना. स्मृ. स्त्रीपुं. ८५ )

यवीयसोऽथवा ज्यायानुभौ तौ गुरुतल्पगौ ।

( ना. स्मृ. स्त्रीपुं. ८६ )

देवरशब्देन पत्युर्ज्येष्ठाः कनिष्ठा वा भ्रातर उच्यन्ते ।

कुले तदवशेषे तु सन्तानार्थं हि कामतः ।
नियुक्तो गुरुभिर्गच्छेद्भ्रातुर्भार्यां यवीयसः ॥

यवीयसो भ्रातुर्भार्यां ज्येष्ठो गच्छेदित्यर्थः ।

अविद्यमाने तु गुरौ राज्ञे वाच्यः कुलक्षयः ।
ततस्तद्वचनाद्गच्छेदनुशिष्यात्स्त्रियस्तु सः ॥ इति ।

[ इति स्त्रीसङ्ग्रहणाख्यपदम्(१) । ]

# अथ दायभागोऽभिधीयते ।

दायस्य विभागो दायविभागः । *दायो धनं, तच्च स्वम् । [ स्वत्वं ] च लौकिकमेव। यत्स्वामिसम्बन्धनिमित्तादन्यर्दायं जायते तत् । द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशे व्यवस्थापनं विभागः ।

विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं व्यवहारपदं हि तत् ॥

( ना॰ स्मृ॰ दाय॰ १ )

इति नारदस्मरणात् ।

पित्र्यस्येति स्वत्वनिमित्तसम्बन्धमुपलक्षयति। पुत्रैरिति प्रत्यासत्तिम् । स च द्विविधः । सप्रतिबन्धोऽप्रतिबन्धश्च । अप्रतिबन्धो दायः पितृपितामहद्रव्यम् । सप्रतिबन्धस्तु पित्रादीनां पुत्रादिधनम् । स च विभागः कदा कर्तव्य इत्यपेक्षायामवदन्नारदः—

---

( १ ) अत्र पुष्पिकाया ( Colophon ) अभावः पुस्तकद्वयेऽपि ।

अत ऊ[र्ध्वं पि]तुः पुत्रा विभजेयुर्धनं क्रमात् ।
मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ॥

(ना. स्मृ. दाय. २) इति ।

मातुर्दुहितरोऽभावे मृताया[मिति] यावत् । क्वचिदेवं पाठः—

अत ऊर्ध्वं मृते पुत्रा विभजेयुर्धनं पितुः ॥ इति ।

तत्तत्स्मृतिव्याख्यानं सान्वयमु[परिष्टा]द्वक्ष्यामः । तथा देवलः—

पितर्युपरते पुत्रा विभजेयुर्धनं पितुः ।
अस्वाम्यं हि भवेत्तेषां निर्दोषे पितरि स्थिते ॥ इति ।

तथाच भृगुः—

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातृभिः सह ।
भजेयुः पैतृकं रिक्थमनीशास्ते हि जीव[तोः] ॥

( मनु. ९–१०४ ) इति ।

अयमर्थः—पितुरूर्ध्वं पितुर्धनविभागकालः । तथा मातुः ऊर्ध्वं मातुर्धनविभागकालः । ततश्च पितु[रूर्ध्वं जी]वन्त्यामपि मातरि पितृधनविभागः । तथा मातुरूर्ध्वं जीवत्यपि पितरि मातृधनविभागः कर्तव्यः । जीवतोस्तु तयोस्त[त्सा]ध्यविभागे पुत्राणां न स्वातन्त्र्यमस्ति । “जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपधर्मेऽस्वातन्त्र्य”मिति हारीतस्म[रणात् । ] अर्थादानमर्थोपभोग उच्यते । विसर्गो व्ययः । आक्षेपो भृत्यादेः शिक्षार्थम् । धर्मेऽस्वातन्त्र्यं तु पृथगिष्टापूर्ता[दावप्र]वृत्तेरिति । ननु कथमन्यतरमरणे विभागकल्पना । मृतधने जीवत एव स्वामित्वान्न पुत्राणामिति चेत्? उच्यते। यतो हि [पति]मरणे पितृभार्यायाः पत्युर्धने न स्वात-

न्त्येण स्वामिता। यस्माच्च भार्यामरणेऽपि सत्स्वपत्येषु भार्याधने पत्युः स्वा[तन्त्र्ये]ण न स्वामिता। तस्मात्तयोरन्यतरस्मिन् जीवत्यपि अ-न्यतरविभागो युक्ततां भजते। तथा मातृधनविभा[गे]ऽपि। तथाहि पितरि जीवति सत्स्वपत्येषु यस्मान्न स्त्रीधनस्य पतिः पतिरिति। यो-गिना कालान्तरमप्यभिहितम्—

विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान्।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः॥

(याज्ञ॰ २–११४)

अयमर्थः—यदा पिता विभागं कर्तुमिच्छति तदा पु-त्रान् आत्मनः सकाशात् विभजेत्। इच्छया विभागप्रकारमभिव्य-नक्ति 'ज्येष्ठं वा श्रेष्ठभागेने'ति। स्मृतिकारैरुक्तः—

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्।

असौ विषमविभागपक्षः। समभागपक्षमाह—'सर्वे वा स्युः समांशिन' इति*(१)।

अत्र त्रयः काला मुख्यः मध्यमः कनिष्ठश्च। पितुरूर्ध्वं मुख्य-कालः। पितृपरिचरणव्यतिक्रमदोष(?)भावेन मुख्यत्वं तस्य। जीव-त्यपि पितरि अनिच्छत्यपि मातू रजसि निवृत्ते विभागः। अयं म-ध्यमः कालः। जीवति पितरीच्छति कनिष्ठः कालः। अथवा द्वि-तीयपक्षाश्रयणेनास्तु कालविभागः। यदा पितुर्विभागेच्छा स ता-

(१) २१२ तमपृष्ठत आरभ्य, एतावत्पर्यन्तं **चिह्नगतो ग्रन्थः 'ख' पुस्तके नास्ति। 'क' पुस्तकेऽपि लिप्यन्तरेण शोधपत्रं प्रपूर्य लिखितः।

वदेकः कालः। जीवत्येव पितरि द्रव्यनिस्पृहे मातुर्निवृत्ते रजसि पितुरनिच्छायामपि पुत्रेच्छयैव विभाग इत्यपरः कालः। स च भागो द्विविधः समो विषमश्च। तत्र द्वितीयः "ज्येष्ठं वा श्रेष्ठभागेने" त्यनेनाभिहितः। प्रथमस्तु "सर्वे वा स्युः समांशिन" इत्यने-(त्ये)न। श्रेष्ठभागोऽपि मनुना दर्शितः—

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्।
ततोऽर्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः॥

(मनु॰ ९-११२) इति।

विषमभागप्रदर्शनं च स्वार्जितद्रव्यविषयतया मन्तव्यम्। पितृपरम्पराऽऽयाते च द्रव्ये समस्वाम्यस्य विद्यमानत्वात्। वक्ष्यामश्चैतत्। स च विषमविभागः शास्त्रदृष्टमार्गेण चेदनुष्ठितः तदैव निर्वहेदधर्मकृतश्च परावर्त्तते। यदाह नारदः—

व्याधितः कुपितश्चैव विषयासक्तमानसः।
अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः॥

(ना॰ स्मृ॰ दाय॰ १६) इति।

तथा योगीश्वरोऽप्याह—

न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः कृतः॥

(याज्ञ॰ २-११६) इति।

न्यूनाधिकविभागेन विभक्तानां पुत्राणामयं न्यूनाधिकविभागो धर्मशास्त्रीयश्चेत्तदासौ पितृकृतः कृत एव न निवर्त्तते। शास्त्रमार्गेणा[न]नुष्ठितश्चेत्पितृकृतोऽपि निवर्त्तत इत्याशयः। तथा नारदेनापि जीवद्विभागे विषमभागो दर्शितः—

पितैव वा स्वयं पुत्रान् विभजेद्वयसि स्थिते ।
ज्येष्ठं श्रेष्ठविभागेन यथा वाऽस्य मतिर्भवेत् ॥

( ना. स्मृ. दाय. ४ )

पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः ।
तेषां स एव धर्मः स्यात् सर्वस्य हि पिता प्रभुः ॥

( ना. स्मृ. दाय. १५ )

द्वावंशौ प्रतिपद्येत, विभजन्नात्मनः पिता ॥

( ना. स्मृ. दाय. १२ )

समन्यूनाधिका भागाः पित्रा ये ये विकल्पिताः ।
तथैव ते पालनीया विनेयाः स्युरतोऽन्यथेति ॥

ततश्च जीवता पित्रा द्विधा विभागः समविषमभेदेन कर्त्तव्यः । तत्र समविभागे विशेषोऽभिहितः—

यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥

( याज्ञ. २–११५ )

दत्ते स्त्रीधने त्वर्धांशोऽभिहितः—

न दत्तं स्त्रीधनं मूल्यं त्वर्धं तु परिकल्पयेदिति(१) ॥

स्त्रीधनमाह कात्यायनः—

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ ।
तदुपाग्निकृतं सद्भिः स्त्रीधनं परिकल्पितमिति ॥

---

(१) न दत्तं स्त्रीधनं यस्यै, दत्ते त्वर्धं प्रकल्पयेदिति याज्ञ. ( २–१४८ ) पा. ।

समविषमपक्षयोरपवादमाह—

शक्तस्यानीहमानस्य किंचिद्दत्त्वा पृथक् क्रिया ।

( याज्ञ. २–११६ )

शक्तस्य पैतृकं द्रव्यमनीहमानस्यासारमपि दत्त्वा भागः कार्यः। पार्थक्यस्य युक्तत्वात्। स्त्रियस्तु पुत्रांशादर्धांशभाजो भवेयुः। पितर्युपरतेऽपि धर्मविवृद्ध्यर्थं विभागकर्त्तव्यता प्रतीयते । तदुक्तं ब्रह्मणा—

एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया ।

पृथग्विवर्धते धर्मः तस्माद्धर्म्या पृथक्क्रिया ॥

तथा गुरवोऽप्यवोचन्—

एकपाकेन वसतां पितृदेवद्विजार्चनम् ।

एकं भवेद्विभक्तानां तदेव तु गृहे गृहे ॥ इति ।

पित्रोरूर्ध्वं विभागे प्रकारनियमो दृश्यते । तथा योगी–

विभजेयुः सुताः पित्रोरूर्ध्वं वित्तमृणं समम् ॥

( याज्ञ. २–११७ ) इति ।

पित्रोरूर्ध्वमिति कालो दर्शितः। सुता[इति]कर्तृपदमेतत् । सममिति प्रकारकथनम् । ततश्च सममेव रिक्थमृणं च विभजेरन्नित्यर्थः । ननु सममित्यनुपपन्नं पित्रोरूर्ध्वं विभागेऽपि विषमविभागस्य शास्त्रे दृष्टत्वात् । तथा चाह परमर्षिः—

"ऊर्ध्वं पितुश्च मातुश्च" (मनु. ९–१०४) इत्युपक्रम्य—

ज्येष्ठ एव तु गृह्णीयात् पित्र्यमंशमशेषतः ।

शेषास्तमुपजीवेयुः यथैव पितरं तथा ॥

( मनु. ९–१०५ )

ज्येष्ठस्य विंश उद्धारस्सर्वद्रव्याच्च यद्वरम् ।
ततोऽर्द्धं मध्यमस्य स्यात् तुरीयं तु यवीयसः ॥

( मनु. ९-११२ ) इति ।

ज्येष्ठस्य द्वौ भागौ दातव्यौ। तदुत्तरभाविनः सार्ध एको भागः। तदनुजातामेकैको भागइत्यर्थः । तदुक्तमृषिणा—

उद्धारेऽनुद्धृतेऽन्येषामियं स्यादंशकल्पना ।

( मनु. ९-११६ )

एकाधिकं हरेज्ज्येष्ठः पुत्रो ह्यर्धं ततोऽनुजः ।
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ।

( मनु. ९-११७ ) इति मनुः ।

अधिकज्येष्ठपर्यंतपुत्रेषु कथं विभागो विषमः । समस्तकनिष्ठापेक्षया सर्वेषां ज्येष्ठत्वात्सर्वज्येष्ठापेक्षयेतरेषां कनिष्ठत्वादिति विषमत्वात् ? नायं विषम उपन्यासः । सर्वज्येष्ठस्य उक्तरीत्या उद्धारपक्षेण ज्येष्ठो भागः । ततः अव्यवहितकनिष्ठस्य मध्यमो भाग इतरेषां सर्वेषामपि एकैको भाग इति । तदुक्तं—"अंशमंशं यवीयांस" इति । वीप्सा हि सर्वेभ्यः कनिष्ठेभ्य एकैकं भागमनुवदति। ज्यैष्ठ्यं च वयोविद्यागुणैरेव वक्तव्यम् । तदाह कात्यायनः—

जन्मविद्यागुणैर्ज्येष्ठो द्व्यंशं दायमवाप्नुयात् ।

बृहस्पतिः—

वयोविद्यातपोभिश्च द्व्यंशं हि लभते धनम् ।
यथा यथा विभागाप्तं धनं यागार्थतामियात् ।
तथा तथा विधातव्यं विद्वद्भिर्भागगौरवमिति ।

तस्माद्विभागो जीवति पितरि पित्रोरूर्ध्वं वा विषमविभागो दृष्टः [तत्]कथं सममेव विभजेरन्निति आर्थिकान्यसंख्याव्यावृत्त्या शाब्दसमत्वायोगव्यावृत्त्या निर्बन्धापरपर्यायनियमः स्वीक्रियते ? अत्र वदामः । सत्यमस्त्येव विषमोऽपि विभागः शास्त्रदृष्टस्तथापि नानुष्ठेयः स्यात् मधुपर्के गवालम्भनवत् । देवरात्सुतोत्पादनवत् । लोकविद्विष्टस्य च श्रेयः साधनस्यापि निषेधात् । तदुक्तम्—

अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्नतु । इति ।

यथा "मैत्रावरुणीं गामालभेते" त्यालम्भविधानेऽपि लोकविद्विष्टतया नानुष्ठेयो गवालम्भः । यथा वा—

महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ॥

( याज्ञ॰ १–१०९ ) इति ।

शास्त्रविहितमप्यननुष्ठेयं लोकविद्विष्टत्वात् । तस्माद्यथा

अक्षता गोपशुं चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ॥

इतिवत्—पित्रोरूर्ध्वं विषमविभागो युगान्तरविषय इत्यवगन्तव्यम् । तदुक्तं संग्रहकारेण—

यथा नियोगधर्मोऽयं नानूबन्ध्यावधोऽपि वा ।
तथोद्धारविभागो हि नैव सम्प्रति वर्त्तते ॥

सम्प्रति कलावित्यर्थः । आपस्तम्बेनापि 'जीवन् पुत्रेभ्यो दायं विभजेत्समम्'मिति। ततश्च विषमो भागः शास्त्रदृष्टोऽपि श्रुतिलोकविरोधाभ्यां नानुष्ठेय इति सममेव विभजेरन्निति युक्तो नियमः ।

मातृपितृधनं सुता विभजेरन् । इदमपि क्वचिदपोद्यते । क ?

मातृधने। तथाहि मातृकृतमृणं पुत्रा एवापाकुर्युः न दुहितरः। ऋणा-वशिष्टं च धनं दुहितर एवाङ्गीकुर्युः न पुत्राः। युक्तिसहश्चायं पक्षः। तथाहि दुहितृषु स्त्र्यवयवास्सन्ति बाहुल्येन पुत्रेषु च पुंसोऽवयवाः।

पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः।

( मनु॰ ३–४९ )

इत्युक्तेः। ततश्च मातृऋणं पुत्रा अपाकुर्युः। ऋणशेषं च दुहितरो विभजेरन्निति। तदुक्तं मनुना—(१)

"मातुर्दुहितरः शेषमृणात्॥ ( याज्ञ॰ २–११७ ) इति।

अत्र गोतमेन विशेषोऽभिहितः 'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चे'ति। अप्रतिष्ठिता निर्धनाः। सधननिर्धनसमवाये निर्धनानामेव धनसम्बन्धो न सधनानामिति। ततश्च पुत्रादीनां मातृधने विभागो दुहित्रभाव इति सिद्धम्। अथ पितामहधने पौत्राणां विभागे विशेषोऽभिधीयते। तथाहि न यद्यपि पौत्राणां पितामहधने जन्मनैव स्वत्वं पुत्रवदविशिष्टं तथापि पौत्राणां पुत्रप्रणालिकयैव पितामहद्रव्ये विभागकल्पना सञ्जायते न स्वरूपेण। अयं भावः। यथा विभक्ता भ्रातरः पुत्रानुत्पाद्य स्वर्याताः तत्रैकस्य पुत्रद्वयमपरस्य पुत्रत्रयमपरस्य पुत्रचतुष्टयमिति तत्र पौत्राणां जन्मनैव स्वत्वेऽपि द्वावेकं त्रयोऽप्येकं चत्वारो[ऽप्येकं] पित्र्यमंशं लभन्ते इति। तदाह योगीश्वरः—

अनेकपितृकाणां तु पितृतो भागकल्पना।

( याज्ञ॰ २–१२० ) इति।

---

(१) नेदं मनुवचनमपितु याज्ञवल्क्यस्य।

तदाह बृहस्पतिः —

तत्पुत्रा विषमाः समाः पितृभागहराः स्मृताः । इति ।

तस्मात्प्रमीतपितृकाणामेकैकस्य पुत्राः विषमसमा न्यूनाधिकसंख्याकाः स्वं स्वं पैतृकमेव भागं लभन्त इत्यर्थः । इदं तु वाक्यं पितुरूर्ध्वं विभागं कुर्वतां प्रमीतभ्रातृव्यैः पुत्रैः पितृव्यैर्वा समावेशः केवलं पितामहधनेऽपि प्रमीतपितृकाणां विभागस्तदा किं कर्तव्यमित्यपेक्षायामुत्तरत्वेनेदमपरार्कविश्वरूपाविज्ञानेश्वरमाधवाचार्यैरवतारितं तदवाप्तभारतीविलाससामर्थ्यानां मनो न विनोदयति । अयं हि तेषामाशयः, यदैकस्य पञ्च पुत्राः अभूवन् तेषां मध्ये त्रिभिर्मध्यमधनमुपादाय वाणिज्यादिना बहुधनमुपार्जितम् । तदा वृद्धिसहितं मूलधनमुद्धृत्य अवशिष्टं धनं त्रिभिरेव ग्राह्यमिति न्यायेनार्थे प्राप्ते व्यवस्थापकमिदं वचः—

सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ॥

( याज्ञ. २–१२० ) इति ।

तथा स्वसुतयोरविभक्तयोर्मध्ये कश्चिद्भ्राता मृतस्तत्सुतस्तु पितामहादप्राप्तांशः पितामहोऽपि नादात् तदाह कात्यायनः—

अविभक्तेऽनुजेऽप्रेते तत्सुतं रिक्थभागिनम् ।
कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥
लभेत्स पित्र्यमंशं तु पितृव्यात्तस्य वा सुतात् ।
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ॥
लभेत तत्सुतो वापि निवृत्तिः परतो भवेदिति ।

जीवत्पितृकस्य हि पितामहधने पित्रा सह विभागो बृहस-

तियोगीश्वराभ्यां दर्शितः—

तथा पितामहोपात्ते जङ्गमे स्थावरेऽपि वा ।
समप्रंशित्वमाख्यातं पितुः पुत्रस्य चैव हि ॥
भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ॥

( याज्ञ. २–१२१ ) इति ।

भूशालिक्षेत्रादिकं निबध्यत इति निबन्धो(?)पादिकादि एकस्य पर्णभारस्य इयन्ति पर्णानि एकस्य क्रमुकभारस्य इयन्ति क्रमुकफलानीत्याद्युक्तलक्षणः । द्रव्यं सुवर्णरजतादि यत्पितामहेन प्रतिग्रहविजयादिना लब्धम्, तत्र पितृपुत्रयोः समस्वाम्यात् न पित्रिच्छया विभागो नापि पितुर्भागद्वयम् । कथं तर्हि तैरविरोधः ? इष्टं हि व्यवस्थाविषयसमर्पणो पितृतो भागकल्पनेत्येतत् समानेऽपि स्वाम्ये वाचनिकम् । "द्वावंशौ प्रतिपद्येत विभजन् ( ना. स्मृ. दाय. १२ )" इत्येतत्प्रभृति वाक्यजातं युगान्तरे विषमभागप्रतिपादनपरम् । अथवा स्वार्जितद्रव्यविषयम् । 'विभागं चेत्पिता कुर्यात्' ( याज्ञ. २–११४ ) इत्येतदपि स्वार्जितद्रव्यविषयम् । तथा

जीवतोरस्वतन्त्रः स्यात् जरयापि समन्वितः ।

इत्येतदपि पारतन्त्र्यं मातापित्रर्जितद्रव्यविषयम् । 'अनीशास्ते हि जीवतोः' ( मनु. ९–१०४ ) इत्येतदपि [ मातापि]त्रर्जितविषयम् । पितामहोपात्तेऽपि द्रव्ये क्वचित्पितुरिच्छयैव स्वार्जित इव विभागो भवतीति मनुनोक्तम् ।

पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् ।

न तत्पुत्रैर्भजे(वे)त्सार्धमकामः स्वयमर्जितम् ॥

( मनु. ९-२०९ )

पितामहार्जितमपि पितामहादिना केनाप्यनुद्धृतं यदपि नोद्धरेत् तदपि स्वार्जितमिव विभजेदिति । तथाच कात्यायनः—

स्वशक्त्याऽपहृतं नष्टं स्वयमाप्तं च यद्भवेत् ।
एतत्सर्वं पिता पुत्रैर्विभागे नैव दाप्यते ॥

गुरुः—

पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिना प्राप्तं तत्र स्वाम्यं(म्ये)पितुः स्मृतम् ॥ इति ।

विभागोत्तरकालमुत्पन्नपुत्रे विभागकल्पनाप्रकारमाह योगी—

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।

( याज्ञ. २-१२२ )

विभक्तेषु पुत्रेषु। विभज्यत इति विभागः। पित्रोरंशः। पित्रोरूर्ध्वं तयोरंशं लभत इत्यर्थः। मातृभागं तु दुहितरो लभन्ते 'मातुर्दुहितरः शेषम्' (याज्ञ. २-११७) इत्युक्तेः। असवर्णायां जातः स्वांशमेव पित्र्यं लभते मातृकं सर्वमेव। तदाह मनुः—

ऊर्ध्वं विभागजातस्तु पित्र्यमेव हरेद्धनम् ।

( मनु. ९-२१६ )

पित्रोरिदं पित्र्यम् ।

अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजः ॥ इति ।

विभागात्पूर्वमुत्पन्नो विभक्तयोर्मातापित्रोर्भागे न स्वामी। विभक्तश्च भ्रातृभागे न स्वामीति भावः। पुत्रैः सह पितुर्विभागे जाते

तदुत्तरकालमर्जितं धनं पित्रा विभागोत्तरमुत्पन्नस्यैव देयं न विभक्त-पुत्रेभ्यः । तदुक्तं मनुना—(१)

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम् ।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥ इति ।

विभक्ताः पुत्राः पित्रा सह संसृष्टाः तेषां विभागोत्तरकालमुत्पन्नानां च विभागः । तदाह मनुः—

संसृष्टास्तेन ये वा स्युर्विभजेत्तनयैः सह ॥
( मनु॰ ९-२१६ ) इति ।

अजीवद्विभागोत्तरकालमुत्पन्नस्य पुत्रस्य भागो देयः । तथा च योगी—

दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ।
( याज्ञ॰ २-१२२ )

मृते पितरि भ्रातृविभागवेलायां गुप्तगर्भायां जनन्यां विभागेनोत्तरकालोत्पन्नपुत्रस्य दृश्याद् भ्रातृपरिगृहीतादुपचयापचयाभ्यामवधारितपरिमाणात् किंचित् किंचिदुद्धृत्य स्वभागसम एव भागो दातव्यः। एवमेव मृतभ्रातृभार्यायामपि भागकाले गुप्तगर्भायां विभागोत्तरमुत्पन्नस्य भागकल्पना । स्पष्टगर्भायां मातरि भ्रातृजायायां वा प्रसवं प्रतीक्ष्यैव विभागः कर्त्तव्यः। तथाच स्मरति वसिष्ठः—"अथ भ्रातृणां दायविभागो या या अनपत्याः स्त्रियस्तासामा पुत्रलाभात्" इति। विभक्तेभ्यः पितृभ्यामर्थालङ्कारदानेऽपि विभक्तजेन पुत्रेण निषेधः [न]कार्यः । अनुमतिश्च कार्या । तदाह योगी—

(१) नेदं मनुस्मृतौ लभ्यते ।

पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् ।

( याज्ञ. २–१२३ ) इति ।

अजीवद्विभागे मातुरंशकल्पना कार्या तदाह योगी—

पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत् ।

( याज्ञ. २–१२३ ) इति ।

अप्राप्ते स्त्रीधने समोंऽशः । स्त्रीधनप्राप्तौ त्वर्धांशः । तदुक्तं 'दत्ते त्वर्धांशहारिणी' इति । दत्ते स्त्रीधने । ततश्च प्रातिस्विकस्त्रीधनशून्या जननी पुत्रसमांशा । जननीग्रहणं सपत्न्यादेरुपलक्षणम् ।

असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः ।

पितामह्यादयः सर्वा मातृतुल्याः प्रकीर्तिताः ॥

इति व्यासस्मरणात् । मात्रा च जीवनोपयुक्तमेव धनं ग्राह्यम् । अन्यथांऽशसमशब्दावनर्थकौ भवेताम् । भिन्नोदरसवर्णानां समसंख्यानां विभागप्रकारो योगीश्वरेणा(?)भिहितः—

समानजातिसंख्या ये जायन्ते यदि सूनवः ।

विभिन्नमातृकास्तेषां मातृभागः प्रशस्यते ॥

तथाच गुरुरपि—

यथैकजाता बहवः समाना जातिसंख्यया ।

स्वधनैस्तैर्विभक्तव्यं मातृभागेन धर्मतः ॥

विसंख्येषु विशेषः—

सवर्णा भिन्नसंख्या ये पुं(षु)भागस्तेषु शस्यते ।

इति गुरुस्मरणात् । भिन्नजातीयेषु पुत्राणां विभागे विशेषः ।

ब्राह्मणक्षत्रियवैश्यशूद्रजातीयस्त्रीषु ब्राह्मणेनोत्पादिता ब्राह्मणमूर्धावसिक्ताम्बष्ठनिषादाः प्रत्येकं यथाक्रमं चतुस्त्रिद्व्येकभागान् भजन्ते। क्षत्रियवैश्यशूद्रजातीयस्त्रीषु क्षत्रियोत्पादिताः क्षत्रियमाहिष्योग्राः त्रिद्व्येकभागान्। वैश्यशूद्रजातीयस्त्रीषु वैश्योत्पादितौ वैश्यकरणौ द्व्येकभागौ लभेते इति। तथाच मनुः—

ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदि स्त्रियः।
तासां पुत्रेषु जातेषु विभागेऽयं विधिः स्मृतः॥

(मनु॰ ९-१४९) इति।

तत्सर्वं वा रिक्थजातं दशधा प्रविभज्य तु।
धर्म्यं विभागं कुर्वीत विधिनानेन धर्मवित्॥

(मनु॰ ९-१५२) इति।

चतुरंशान् हरेद्विप्रः त्रीनंशान् क्षत्रियासुतः।
वैश्यापुत्रो हरेद्द्व्यंशमंशं शूद्रासुतो हरेत्॥

(मनु॰ ९-१५३) इति।

अत्र हि प्रतिग्रहलब्धभूव्यतिरिक्तता ज्ञेया। तथाच गुरुः—

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै।
यद्यप्येषां पिता दद्यात् मृते(तां च) विप्रासुतो हरेत्॥ इति।

प्रतिग्रहविशेषणसामर्थ्यात् क्रयादिलब्धा भूर्देयेति प्रतीयते।

शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति।

इति विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वाच्चायमर्थोऽवगम्यते। आनुलोम्यजातस्य पुत्रस्य।

आनुलोम्यकजातस्तु पितुः सर्वस्वभाक् भवेत्।

इति नारद(१)वचसः सर्वस्वभाक्त्व(ग)मत्र(प)गम्यते । एतस्यापि—

निषाद एकपुत्रस्तु विप्रस्वस्य तृतीयभाक् ।

इति मनु(२)वाक्यैः निषादव्यतिरिक्तताऽवगम्यते ।

यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽपि वा भवेत् ।
नाधिकं दशमाद्द्याच्छूद्रापुत्राय धर्मतः ॥

( मनु. ९–१५४ )

इति मनुवचनमपि अशुश्रूषुशूद्रापुत्रविषयम् । अन्यथा विष्णूक्तं 'क्षत्रियेण वैश्येन वा शूद्रयामुत्पादितः एकपुत्रोऽर्धमेव हरेदि'ति-अर्धांशभाक्त्वमनुपपन्नं स्यात् । अजीवद्विभागे केचिद्भ्रातरो भगिन्यश्चासंस्कृताः पूर्वसंस्कृतैः भ्रातृभिः समुदायद्रव्येण संस्कार्याः । तदाह व्यासः—

असंस्कृतास्तु ये केचित्पैतृकादेव ते धनात् ।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥ इति ।

भगिनीसंस्कारे योगिना विशेष उक्तः—

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम् ॥

( याज्ञ. २–१२४ ) इति ।

अयमत्र वाक्ये योजनार्थकरोऽर्थः—असंस्कृता भगिन्यो भ्रातृभिर्निजादंशाच्चतुर्थमंशं दत्त्वा संस्कार्या इति । अनेकदुहितरोऽपि च पितुरूर्ध्वमंशभागिन्य इति प्रतीयते । निजादंशादित्यनेन यज्जा-

(१) ना० स्मृ० नोपलभ्यते । देवलीयत्वेन प० मा० धृतम् ।

(२) मनुस्मृतौ न लभ्यते । देवलीयमिति प० मा० ।

तीया कन्यका तज्जातीयपुत्रभागाच्चतुर्थमंशमिति सूचितम् । अयं भावः—कस्यचिद्ब्राह्मणस्य ब्राह्मण्येव पत्नी ; तस्याश्चैक एव पुत्र एकैव च कन्या ; तत्र पित्र्यं सर्वं द्रव्यं द्वेधा विभज्य तत्रैकं भागं चतुर्धा विभज्य चतुर्थमंशं कन्यायै दत्त्वा शेषं पुत्रो गृह्णीयात् । अथ द्वौ पुत्रौ कन्या चैका ; तदा पितृधनं त्रेधा विभज्य तत्रैकं भागं चतुर्धा विभज्य तुरीयमंशं कन्यायै दत्त्वा अवशिष्टं द्रव्यं पुत्राभ्यां विभज्य ग्राह्यम् । अथैकः पुत्रः द्वे च कन्ये तदा पित्र्यं धनं त्रिधा विभज्य तत्रैकं भागं चतुर्धा विभज्य द्वौ भागौ द्वाभ्यां कन्याभ्यां दत्त्वा अवशिष्टं पुत्रेण ग्राह्यम् । अनयैव दिशा समानजातीयेषु समविषमेषु बन्धुषु समविषमासु भगिनीषु च योजना कर्तव्या । यदा तु ब्राह्मणीपुत्र एकः ; क्षत्रियाकन्या चैका ; तत्र पित्र्यं द्रव्यं सप्तधा विभज्य क्षत्रियापुत्रभागान् त्रींश्चतुर्धा विभज्य तुरीयांशं क्षत्रियाकन्यायै दत्त्वा शेषं ब्राह्मणीपुत्रो गृह्णाति । यदा तु ब्राह्मणीपुत्रौ द्वौ क्षत्रियाकन्यैका ; तत्र पित्र्यं धनमेकादशधा विभज्य तेषु त्रीनंशान् क्षत्रियापुत्रभागांश्चतुर्धा विभज्य चतुर्थमंशं क्षत्रियाकन्यायै दत्त्वा शेषं सर्वस्वं ब्राह्मणीपुत्रौ गृह्णीतः । एवं जातिवैषम्ये भ्रातॄणां भगिनीनां च संख्याया वैषम्ये च योजनीय[मिति] मेधातिथेर्व्याख्यानम् । एतदेव व्याख्यानं विज्ञानेश्वरभट्टानामिति । माधवाचार्याश्च मन्यन्ते । भारुचेस्तु अन्यदभिमतं—अंशकल्पना विवाहसंस्कारार्थेति । स्मृतिचन्द्रिकाकाराणां तदेवेष्टम् । तदाह देवलः—

कन्याभ्यश्च पितृद्रव्यं देयं वैवाहिकं वस्विति ।

तर्हि दायभागार्थं वांशग्रहणं विवाहार्थं वेति धर्ममर्मवादिनः स-

ज्जनाः प्रष्टव्याः । तदुक्तं विज्ञानेश्वरैः—"न च दत्त्वांशं तुरीयकमिति तुरीयांशविवक्षायां संस्कारमात्रोपयोगि द्रव्यं दत्त्वेति व्याख्यानं युक्तम्, मनुवचनविरोधात् । तदाह मनुः—

स्वेभ्योंऽशेभ्यस्तु कन्यायाः प्रदद्युर्भ्रातरः पृथक् ।
स्वात्स्वादंशाच्चतुर्भागं पतिताःस्युरदित्सवः ॥

(मनु॰ ९-११८) इति" ।

जीवद्विभागे तु यत् किञ्चित्पिता ददाति तदेव लभते नान्यत् । पित्र्यधनाभावे नारदः—

अविद्यमाने पित्र्येऽर्थे स्वांशादुद्धृत्य वा पुनः ।
अवश्यकार्याः संस्काराः सङ्कोचोऽत्राविवक्षितः ॥

(ना॰ स्मृ॰ दाय॰ ३४) इति ।

अत्र संस्कारा भ्रातॄणां भगिनीनां च जातकर्माद्याः प्रसिद्धाः । पित्रभावे पूर्वसंस्कृतैर्भ्रातृभिः पितृधनाभावेऽपि भगिनीनां संस्कारा अवश्यं कर्तव्याः । पैतृकद्रव्यविभागकाले च स्वधृतालंकारादिकमपि कन्या लभते । उक्तं च शङ्खेन—"विभज्यमाने द्रव्ये दाये कन्याऽलङ्कारं वैवाहिकं स्त्रीधनं च लभेत" इति । एवं पित्रा सह पुत्राणां परस्परं दायेऽभिहिते प्रसङ्गेनाविभाज्यं द्रव्यमभिधीयते । अविभाज्यमाह योगी—

पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥

(याज्ञ॰ २-११८)

क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तु यः ।

दायादेभ्यो न तद्द्याद्विद्यया लब्धमेव च ॥

( याज्ञ० २—११९ ) इति ।

पितृद्रव्याविरोधेन मात्रापित्रोर्द्रव्याविनाशेन स्वयं कृष्यादिनोपार्जितम् । यच्च विद्यादिना लब्धं विवाहाच्च तथा मैत्रं मित्रसकाशाल्लब्धं क्रमात्पितृक्रमायातं चौरादिभिरपहृतं द्रव्यं पुत्रान्यतमेन राजाज्ञया उद्धृतं पित्रादिभिरनुद्धृतं चेत्तस्यैव तत्सम्भवति न दायादेभ्यो देयम् । क्षेत्रं चेदुद्धृतं तुरीयांशमुद्धृत्त्वा गृह्णाति । शेषं सर्वेषामेव । तदुक्तं शङ्खेन—

पूर्वनष्टां तु यो भूमिमेकश्चेदुद्धरेत्क्रमात् ।

यथाभागं लभन्तेऽन्ये दत्त्वांशं तु तुरीयकमिति ॥

तथाच विद्याध्यापनादिना लब्धमपि स्वस्यैव भवति । पितृद्रव्याविरोधेनेति सर्वशेषतया सम्बन्धः(१) । ततश्च पितृद्रव्याविरोधेन यत्स्वयमर्जितं पितृद्रव्याविरोधेन यन्मैत्रलब्धम् । तथा चाह मनुः—

अनुपेत्त्य पितृद्रव्यं श्रमेण यदुपार्जयेत् ।

दायादेभ्यो न तद्द्याद्विद्यया लब्धमेव च ॥(२)

---

(१) पितृद्रव्याविरोधेनेत्यस्य सर्वशेषत्वाभावे मैत्रमौद्वाहिकमित्यादि नारब्धव्यम् । अथ पितृद्रव्याविरोधेनापि यन्मत्रादिलब्धं तस्याविभाज्यत्वाय मैत्रादिवचनमर्थवदित्युच्यते ; तथा सति समाचारविरोधः , विद्यालब्धे नारदवचनविरोधश्चेति ( मि० ) ।

(२) मनुस्मृतौ नोपलब्धोऽपि तु 'अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जितम् । स्वयमीहितलब्धं तन्नाकामो दातुमर्हति' ॥ ( मनु. ९०८ ) इति तत्र पठ्यते ।

श्रमेण सेवायु(यु)द्धादिना । पितृद्रव्यमविभक्तोपलक्षणार्थम् । विद्यालब्धे नारदवचनविरोधः—

कुटुम्बं बिभृयात् भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनं तस्मात्स लभेताश्रुतोऽपि सन् ॥

( ना. स्मृ. दाय. १० ) इति ।

तथा व्यासः—

विद्याप्राप्तं शौर्यधनं यच्च सौदायिकं भवेत् ।
विभाग[का]ले तत्तस्य नान्वेष्टव्यं च रिक्थिभिः ॥

इति । विद्याधनस्याविभाज्यस्य लक्षणमुक्तवान् कात्यायनः—

परभक्तोपयोगेन विद्या प्राप्ताऽन्यतस्तु या ।
तया लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥

ननु मैत्रादिलब्धे पितृद्रव्याविरोधेनेत्यवक्तव्यम् ; विभागस्य प्राप्त्यभावात् । यद्येन प्राप्तं तत्तस्यैव नान्यस्येति लोकवेदप्रसिद्धम् । प्रतिषेधो हि प्राप्तिपूर्वकः । न चात्र सा विद्यते । ननु—

यत्किंचित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति ।
भागो यवीयसां तत्र यदि विद्यानुपालितः ॥

इत्यस्ति प्राप्तिरिति चेत् ? न, प्रसिद्धार्थानुवादकतया ऽप्राप्तप्रतिषेधायोगात् । 'न सोमेऽध्वर' इतिवन्नित्यानुवादत्वे "न तौ पशौ करोती"तिवन्निषेधार्थत्वायोगात् । अन्यथा "अपूर्वे चार्थवादः स्यात् (जै. सू० १०–८–५)" इति दशमाष्टमनिष्टं जैमिनीयं सूत्रं व्याकुलं स्यात् । ततश्च विद्यया लब्धमुक्तप्रकारकमविभाज्य-

मेव । तथा—

उपलब्धेषु यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्याद्विभागे न नियोज्यते ॥
शिष्यादार्त्विज्यतः प्रश्नात् संदिग्धं प्रति निर्णयात् ।
स्वज्ञानशासनाद्वादाल्लब्धं प्राध्याप(धान्य)नाच्च यत् ॥
विद्याधनं तु तत्प्राहुर्विभागे न विभज्यते ।
परं निरस्य यल्लब्धं विद्यातो द्यूत(१)पूर्वकम् ॥
विद्याधनं तु तद्विद्यात् न विभाज्यं बृहस्पतिः ।
शिल्पिष्वपि हि धर्मोऽयं मूल्याद्यत्राधिकं भवेत् ॥
विद्याबलकृतं चैव याज्यतः शिष्यतस्तथा ।
एतद्विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा ॥

किञ्चिद्विद्याप्राप्तमपि धनं विभज्यतया नारदेनोक्तम्(२) ।

मनुः—

पत्रं वस्त्रमलंकारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥

( मनु. ९–२१९ ) इति ।

धृतानामेव वस्त्राणामविभाज्यत्वम् । येन धृतं तस्यैव । पितृधृतानि पितुरूर्ध्वं विभजतां श्राद्धभोक्त्रे दातव्यानि । तदुक्तं गुरुणा—

वस्त्रालङ्कारशय्याद्यं पितुर्यद्वाहनादिकम् ।

---

( १ ) अद्भुतपूर्वकमिति प० मा० ।

( २ ) कुटुम्बं बिभृयाद्भ्रातुरित्यादिना । तत्पुरस्तान्निवेदितम् ।

गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥

अभिनवानि वस्त्राणि विभाज्यान्येव । पत्रं वाहनमश्वशिविकादि, तदपि यद्येनारूढं तत्तस्यैव पित्र्यवस्त्रवदेव । अश्वादीनां बहुत्वे तु तद्विक्रयोपजीविनां तद्विभाज्यत्वमेव वैषम्येण विभाज्यत्वे ज्येष्ठस्य ।

अजाविकं सैकशफं न जातु विषमं भजेत् ।
अजाविकं सैकशफं ज्येष्ठस्यैव विधीयते ॥

(मनु. ९-११९)

अलङ्कारोऽपि यो येन धृत सः तस्यैव । अधृतः साधारणो विभाज्य एव—

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥

(मनु. ९-२००)

धृतानामविभाज्यत्वेऽधृतानां विभाज्यता । कृतान्नं तण्डुलमोदकादि । तदप्यविभाज्यम् । यथासम्भवं भोक्तव्यम् । उदकाधारं कूपादि । तच्च विषमं मूल्यादिद्वारेण न विभाज्यम् । किन्तु पर्यायेण भोगः । *अव(नि)रुद्धास्तु पित्रा स्वैरिण्याद्याः समा अपि पुत्रेण न विभाज्याः* । कश्चिद्विशेषः, अविभक्तस्वकुले पितृव्यादेः पितृतोऽपि वा प्राप्तविद्यानां यद्धनं शौर्यादिभिः प्राप्तं तद्विद्याधनमपि विभाज्यमेव । पितृद्रव्याविरोधेनार्जिते विद्याधने भागद्वयमर्जकस्योक्तं वासिष्ठेन—"येन चैषां स्वयमुपार्जितं स्यात्तद्व्यंशमेव लभते"। अविभाज्यविद्याधने अर्जकेच्छया गौतमोऽ-

शविभागमाह—

शौर्यप्राप्तं विद्यया च स्त्रीधनं चैव यत्स्मृतम् ।
एतत्सर्वं विभागे तु विभाज्यं नैव रिक्थिभिरिति ॥
आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते ।
तस्मिन् कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ।
तत्र लब्धं तु यत्किञ्चिद्धनं शौर्येण तद्भवेत् ॥

व्यासः—

साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम् ।
शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः । इति ॥

स्त्रियश्च दास्यो विषमाः कर्मकराः पर्यायेण कर्म कारयितव्याः।
तथाच गुरुः—

एकां स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे ।
बह्व्यः समांशतो देया दासानामप्ययं विधिरिति ॥(१)

योग इति श्रौतस्मार्त्ताग्नि(दि)साध्यमिष्टं कर्म लक्ष्यते । क्षेम इति लब्धपरिरक्षणहेतुभूतं बहिर्वेदि दानं तडागा(टाका)रामनिर्माणादिपूर्तं कर्म लक्ष्यते । तदुभयं पितृद्रव्याविरोधेनार्जितमपि अविभाज्यम् । अथवा योगक्षेमशब्देन शस्त्रचामरच्छत्रोपानत्प्रभृतय उच्यन्ते । प्रचारो गृहारामादिषु प्रवेशनिर्गममार्गः । सोऽप्यविभाज्यः । तथा उशनसा क्षेत्रस्याप्यविभाज्यतोक्ता—

अविभाज्यं सगोत्राणामासहस्रकुलादपि ।

(१) २३३ पृष्ठस्थः **चिह्नगतो ग्रन्थोऽत्रैव युज्यते ।

याज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रियः ॥ इति ;

तत्प्रतिग्रहलब्धक्षेत्रं क्षत्रियासुतेन सार्द्धं (देयं) ब्राह्मणीसुतेनाविभाज्यमित्येवंपरम् ।

मौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलंकृतः ॥
श्रीमद्वल्लभसूनुरात्मनिरतःसत्सम्प्रदायाग्रणीः ।
सारेऽस्मिन् व्यवहारनाम्नि चतुरे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णां कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे दायविभागाख्यं(!) व्यवहारपदम् ॥



## अथ स्त्रीधनविभागः ।

तत्र योगी—

पितृमातृपतिभ्रातृ[द]त्तमध्य[ग्न्यु]पागतम् ।
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ॥

( याज्ञ. २-१४३ )

कात्यायनः—

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकल्पितम् ॥
यत्पु[न]र्लभते (वा)नारी नीयमाना पितुर्गृहात् ।
अध्यावाहनिकं नाम तत्स्त्रीधनमुदाहृतम् ॥
प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा ।
दायादेभ्यो न तद्देयं (१)प्रीतिदत्तं तदुच्यते ॥
ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा ।
भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
बन्धुदत्तं तथा शुल्कमन्वाधेयक(२)मेव च ॥
अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः ।
अध्यग्न्याध्यावाहनिकं दत्तं च प्रीतिकर्मणि ।

---

( १ ) पादवन्दनिकं वापीति प० मा० पा० ।
( २ ) अनादेयिकमिति 'क' 'ख' ।

भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥

( मनु. ९-११४ )

गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम् ।

मूल्यं लब्धन्तु यत्किञ्चिच्छुल्कं तत्परिकीर्तितम् ॥

पित्रादिभिस्त्रीभ्यो धनदाने प्रकारः—

पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै ।

यथा शक्त्या द्विसाहस्रात् दातव्यं स्थावरादृते ॥

स्थावरव्यतिरिक्तं द्विसहस्रकार्षापणपर्यन्तं धनं यथाशक्ति देयम् ।

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत् ।

सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते ॥

तत्र सोपाधि यद्दत्तं यच्च योगवशेन च ।

पित्रा भ्रात्राऽथवा पत्या न तत्स्त्रीधनमिष्यते ॥

उत्सवादौ धारणार्थं दत्तमलङ्कारादिकं सोपाधिनादत्तम्। योगवशेन वचनाद्दत्तमिति । तथा शिल्पेषु दत्तम्(१) प्रीतिदत्तं तु यदन्यतः । एतन्न स्त्रीधनम् ।

तदेतत्स्त्रीधनं दुहितृपुत्ररहितायां(१) प्रथमं दुहिता गृह्णाति । "स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च" इति गौतमस्मरणात् । तदभावे दुहितृदुहितरो गृह्णन्ति । "दुहितॄणां प्रसूता चेत्"

---

(१) प्राप्तं शिल्पैस्तु यत्किञ्चित्प्रीत्या चैव यदन्यतः ।
भर्तुः स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम् ॥
इति वी० मि० धृतकात्यायनवचनात् ।

( याज्ञ॰ २–१४५ ) इति योगिस्मृतेः(१) । तदभावे दौहित्रः । तदाह नारदः—

मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ।

( ना॰ स्मृ. दाय २ ( इति ।

दुहितृदुहितॄणामभावे तदन्वयो दौहित्रो गृह्णातीति । दौहित्राभावे सुताः । तदभावे पितामह्याद्या(?)तदभावे सपत्नीदुहिता । तदभावे तदपत्यम् । हीनजातिस्त्रीधनं कुमारीभागः । तदभावे पौत्राः तदभावे भ्रात्रादयः । ब्राह्मदैवार्षप्राजापत्येषु विवाहेषु संस्कृताया भार्याया धनं दुहित्रादिपौत्रान्तरे(?) धनहारिसन्ततेरभावे सति भर्त्तृगामि न पुनर्मात्रादिगामीति । आसुरराक्षसपैशाचविवाहसंस्कृतभार्याधनं मातापित्रोर्भवति । तथा भर्त्रादिदत्तं शुल्काख्यं स्त्रीधनं सोदरा एव । कन्या पितामहादिसोदर्य एव (?) । कन्यार्थं मातामहादिभिर्दत्तं भूषणादि तदपि सोदरा एव गृह्णीयुस्तदभावे माता; तदभावे पिता । अनपत्यपुत्रिकाधनं सोदरः । कचिदनपत्यस्त्रीधनं स्वस्रीयादयः । क्वचिज्जीवन्त्याः सप्रजाया अपि पत्न्या धनं भर्ता गृह्णीयादिति योगी—

दुर्भिक्षे धर्मकार्ये च व्याधौ सम्प्रतिरोधके ।
गृहीतं स्त्रीधनं भर्त्रा न स्त्रियै दातुमर्हति ॥

( याज्ञ॰ २–१४७ ) इति ।

प्रतिरोधके बन्दिग्रहादौ ।

---

( १ ) 'अत्र दुहितृशब्देन दुहितृदुहितर उच्यते । साक्षाद्दुहितॄणां "मातुर्दुहितरः शेष" मित्युक्तत्वात् [ मि॰ ] ।

अत्र सर्वविभागशेषं किञ्चित् विभागकाले किञ्चित् केनचित् वञ्चितं सर्वं तत्समं विभजेयुः। तथाच याज्ञवल्क्यः—

अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते।
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः॥

(याज्ञ. २—१२६) इति।

समशब्दो विषमभागनिरासार्थः। तथा मनुः—

ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि।
पश्चाद्दृश्येत यत्किञ्चित्तत्सर्वं समतां नयेत्॥

(मनु. ९—२१८) इति

तथाच श्रुतिरपि—"यो वै भागान्नुदत" इति(१)।

पूर्वं समानजातीयानां भ्रातॄणां परस्परं पित्रा च सह विभागो निर्णीतोऽधुना भिन्नजातीयेषु निर्णयः क्रियते।

ब्राह्मणस्य चतस्रो भार्या भवन्ति। ब्राह्मणी क्षत्रिया वैश्या शूद्रा चेति। क्षत्रियस्य तिस्रः क्षत्रिया वैश्या शूद्रा चेति। वैश्यस्य द्वे भार्ये वैश्या शूद्रा चेति। शूद्रस्य शूद्रैवैका। तथाच ब्राह्मणेन ब्राह्मण्यादिषूत्पादिताः प्रत्येकं चतुरश्चतुरो भागान् लभन्ते। तथा ब्राह्मणात् क्षत्रियायामुत्पन्नास्त्रीं-स्त्रीन् भागान् लभन्ते। तत्र ब्राह्मणेन वैश्यस्त्रियामुत्पादिता द्वौ द्वौ। ब्राह्मणाच्छूद्रायामुत्पन्ना एकमेवे(मि)ति। तथा क्षत्रियेण क्षत्रियायामुत्पादिताः प्रत्येकं त्रींस्त्रीन् भागान् लभन्ते। क्षत्रियेण वैश्या-

(१) "यो वै भागिनं भागान्नुदते चयते चैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रं चयते" इति वचनं गौतमीयत्वेन मिताक्षरायां धृतम्।

यामुत्पन्ना द्वौ द्वौ। तथा क्षत्रियेण शूद्रायामुत्पन्ना एकमेकं लभन्ते। तथा वैश्येन वैश्यायामुत्पन्ना एकमेकम्(१)। तथा शूद्रयामुत्पन्ना एकमेकं भागं लभन्ते। तदाह योगी—

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः।
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः॥

(याज्ञ. २–१२५)

"तिस्रो वर्णानुपूर्व्येणे"ति अत्र यद्यप्यविशेषेण चतुस्त्रिद्व्येकभागा इत्यभिहितम्, तथापि प्रतिग्रहप्राप्तभूमिव्यतिरिक्तविषयमिति मन्तव्यम्। अन्यथा—

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै।
यद्यप्येषां पिता दद्यात् मृते विप्रासुतो हरेत्॥

इति वाक्यविरोधः स्यात्। क्रयादिलब्धा भूमिः क्षत्रियादिसुतानामपि भवति।

शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति।

इति विशेषनिषेधात्। शूद्रापुत्रस्य भागाः प्राप्ति(?)जीवता पित्रा यदि शूद्रापुत्राय किमपि प्रीत्या प्रसादेन दानं तद्भवतु वा मा वा। नास्ति चे(ज)न्निजमेकमंशं लभते। तदुक्तम्—

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्।
यदेवास्य पिता दद्यात् तदेवास्य धनं भवेत्॥

(मनु. ९–१५५)

---

(१) द्वौ द्वौ इत्युचितम्।

अथ द्व्यामुष्यायणभागनिर्णयः क्रियते ।

स एव च द्व्यामुष्यायणः यदा ह्यपुत्रो देवरादिः गुरुनियोगेन परभार्यायामुत्पादयति पुत्रं स पुत्रः पुंस(?) च उभयोः बीजक्षेत्रिणोः धर्मतो रिक्थहारी पिण्डदाता च भवति । तथा योगी—

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥

( याज्ञ. २–१२७ ) इति

तथा मनुरपि—

क्रियाभ्युपगमात्क्षेत्रं(देव) बीजार्थं यत्प्रदीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥

( मनु. ९–५३ )

फलं त्वनभिसन्धाय क्षेत्रिणा बीजिना तथा ।
प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी ॥

( मनु. ९–५२ )

अनयोरयमर्थः—अत्रोत्पन्नमपत्यमावयोरुभयोर्भवतु इति संविदङ्गीकारेण क्षेत्रस्वामिना बीजवापार्थं बीजिने किञ्चिद्दीयते तत्रोत्पन्नापत्यस्य बीजिक्षेत्रिणौ स्वामिनौ महर्षीणामभिमतौ । यत्तु तत्रोत्पन्नमपत्यमावयोरिति संविदमकृत्वा परक्षेत्रे बीजिना यदपत्यमुत्पादितम् , तदपत्यं क्षेत्रिण एव । बीजाद्योनिर्बलीयसी । गवाश्वादिषु तथा दर्शनात् । नियोगोऽपि वाग्दत्ताविषय एव । अन्यनियोगस्य मनुना निषिद्धत्वात् । तथाहि—

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया ।

प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥

( मनु ९-५९ )

विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।

एकमुत्पादयेत्पुत्रं न द्वितीयं कथं चन ॥

( मनु ९-६० ) इति ।

एवं नियोगमुपन्यस्य—

नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।

अन्यस्मिन्नपि युञ्जाना धर्मं हन्युः सनातनम् ॥

( मनु ९-६४ )

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।

( मनु ९-६५ )

अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।

( मनु ९-६६ )

मृते भर्तरि या साध्वी ब्रह्मचर्ये व्यवस्थिता ।

स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥

( मनु ५-१६० )

अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते ।

सेह निन्दामवाप्नोति परलोकाच्च हीयते ॥

(मनु ५-१६१ )

न चात्र विहितप्रतिषिद्धत्वाद्विकल्पः, मनुनैव नियोगस्य वाग्दत्ताविषयत्वप्रतिपादनात् ।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।

तामनेन विधानेन निजो विन्देत देवरः ॥

( मनु ६-६६ )

देवरोऽत्र ज्येष्ठः कनिष्ठो वा भ्राता । यथा तस्मिन्मृते तत्सोदरो ज्येष्ठः कनिष्ठो वा भ्राता देवरस्तां परिणयेत् । यथाशास्त्रं परिणयने कृते मिथो रहसि आगर्भधारणात् प्रत्यृतु एकवारं गच्छेत् ।

अथ गौणमुख्यपुत्राणां स्वरूपं दायग्रहणक्रमश्चाभिधीयते ।

तत्र पुत्रा द्वादश—औरसः १, पुत्रिकापुत्रः २, क्षेत्रजः ३, गूढजः ४, कानीनः ५, पौनर्भवः ६, दत्तः ७, क्रीतः ८, कृत्रिमः ६, [स्वयंदत्तः] १०, सहोढाजः ११, अपविद्धः १२ । तत्र मनुः—

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेत्सुतान् ।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पजम् ॥

( मनु ६-१६६ )

अपुत्रोऽनेन विधिना सुतं कुर्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्यां स मे पुत्रो भवेदिति ॥
यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा ।
धर्मेण विनियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥

( मनु ६-१६७ )

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥

( मनु ६-१६८ )

सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥

( मनु ९-१६९ )

उत्पद्यते गृहे यस्य न विज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥

( मनु ९-१७० )

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥

( मनु ९-१७२ )

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥

( मनु ९-१७३ )

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥

( मनु ९-१७४ )

सा चेदक्षतयोनिः स्यात् गतप्रत्यागतापि वा ।
पौनर्भवेन भर्त्राऽसौ पुनः संस्कारमर्हति ॥

( मनु ९-१७६ )

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु तस्य सः ॥

( मनु ९-१७७ )

मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।

यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥

(मनु ९-१७१)

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ।
स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥

(मनु ९-१७८)

दास्यां च दासदास्यां च यः शूद्रस्य सुतो भवेत् ।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥

(मनु ९-१७९)

योगी —

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु स्वगोत्रेणेतरेण वा ॥

(याज्ञ २-१२८)

गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥

(याज्ञ २-१२९)

अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥

(याज्ञ २-१३०)

क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः ।
दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः ॥

(याज्ञ २-१३१)

उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ।

पिण्डदोंऽशहरश्चैषां पूर्वाऽभावे परः परः ॥

( याज्ञ ३–१३२ )

उरसो जात औरसः । धर्मपत्नीजः सवर्णा धर्मविवाहोढा धर्मपत्नी तस्यां जातः स एव सर्वमुख्यः । तत्समः पुत्रिकासुतः, पुत्रिकायाः सुतः पुत्रिकासुतः, अत एव औरसतुल्यः । अथवा पुत्रिकैव पुत्रः । द्व्यामुष्यायणस्तु जनकस्यौरसादविशिष्टः अन्यक्षेत्रोत्पन्नत्वात् । गूढजः भर्तृगृहे प्रच्छन्न उत्पन्नः सवर्णाजः । कानीनः कन्यकायामुत्पन्नः कन्यागर्भः कानीनः । यथा—

अज्ञातपितृको यस्तु कानीनो गूढमातृजः ।

यस्तु अज्ञातपितृको बहुभिः सह संगमात् (?)कन्याया मातामहीयोऽसौ ।

पिण्डदोंऽशहरश्च-पूर्वोक्तद्वादशपुत्रमध्ये पूर्वपूर्वाभावे उत्तरोत्तरः पिण्डदोंऽशहरश्च ज्ञातव्यः । तत्रौरसपुत्रिकयोः समवाये औरसस्यैव मुख्यतया धनग्राहित्वं प्राप्तमपवदति मनुः—

पुत्रिकायां कृतायान्तु यदि पुत्रोऽनु जायते ।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियः ॥

( मनु ३–१३४ ) इति ।

अन्येषां पूर्वपूर्वस्मिन्सत्यपि उत्तरपुत्राणां चतुर्थांशभागित्वमुक्तम् । तथा वदति वसिष्ठः—"तस्मिंश्च प्रतिगृहीते औरस उत्पद्येत (न?) चतुर्थांशभागःस्याद्दत्तक" इति । दत्तकग्रहणं पुत्रीकरणाविशेषात्क्रीतकृत्रिमादीनामुपलक्षणार्थम् । अमुमेवार्थमुपोद्बलयति

कातीयवचः—

उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः ।

सवर्णा असवर्णास्तु ग्रासाच्छादनभागिनः ॥ इति ।

सवर्णाः क्षेत्रजदत्तकादयः । ते सत्यप्यौरसे चतुर्थांशहराः । चतुर्विशेषे(?)असवर्णाः कानीनसहोढगूढोत्पन्नपौनर्भवाः । औरसे सति चतुर्थांशहरा न भवन्ति किन्तु ग्रासाच्छादनमेव लभन्त इत्यर्थः ।

अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः ।

पौनर्भवश्च नैवेते पिण्डरिक्थांशभागिनः ॥

इति विष्णुवचनं तु औरसे सति चतुर्थांशनिषेधपरं न सर्वथा औरसाभावे समस्तधनभागित्व[निषेध]परम् । अन्यथा वचनान्तरविरोधापत्तिः स्यात् ।

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।

शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥

( मनु० ९-१६७ )

इति मनुवचनमपि मुख्यौरसप्रशंसापरं न चतुर्थभागं निषेधतीतिरेषाम् । अन्यथा चतुर्थांशप्रतिपादके वसिष्ठ-कात्यायनवचसी विरुद्धे स्याताम् । यदपि च तेनोक्तम्—

षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् ।

औरसो विभजन्दायात्पित्र्यं पञ्चममेव च ॥

( मनु ९-१६४ ) इति;

तत् प्रतिकूलत्वनिर्गुणत्वविषयम् । तत्रापि विशेषः प्रतिकूलत्वनिर्गुणत्वसमुच्चये षष्ठांशभागित्वम् । केवलप्रातिकूल्ये नैर्गुण्ये वा

पञ्चमांशभागित्वमिति । यदपि च हारीतेनोक्तम्—"विभजिष्य-भाण एकविंशं कानीयाय दद्यात् त्रिंशं पौनर्भवाय एकोनविंशं द्व्यामुष्यायणाय अष्टादश क्षेत्रजाय सप्तदशांशं पुत्रिकापुत्राय इतरत् पारशवाय पुत्राय दद्यात्" इतिः एतदसवर्णनिर्गुणपुत्रविषयम् । यदपि मानवीयवचनेन—

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥

( मनु९–१५९ )

कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥

( मनु ९–१६० ) इतिः

[तदपि] षड्वा····?सापिण्डये समानोदकानां संनिहितरिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थहरत्वमुत्तरषट्कस्य तदभावः । बान्धवत्वं तु समानगोत्रतया सपिण्डत्वेन चोदकप्रदानादिकार्यकरत्वमुभयवर्गस्य समानमिति व्याख्येयम् । पितृधनग्रहणं पूर्वपूर्वाभावे सर्वेषामस्त्ये(न्त्यस्यै)व ।

न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ।

( मनु ९–१८५ )

इति चौरसव्यतिरिक्तानां पुत्रप्रतिनिधीनां सर्वेषां रिक्थहारित्वं मनुनैवोक्तम् । द्व्यामुष्यायणोऽपि····(?) । शूद्रधनविभागे विशेषः । तत्र योगी—

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ।

( याज्ञ २-१३३ )

मृते पितरि कुर्युस्तं भ्रातरस्त्वर्द्धभागिनम् ।
अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ॥

( याज्ञ २-१३४ ) इति ।

कामतः पितुरिच्छया भागं लभते। पितरि मृते यदि परिणीता-पुत्रास्सन्ति भ्रातरः तदा त्ते दासीपुत्रं स्वभागादर्धभागिकं कुर्युः । अथ परिणीता नके(?)न सन्ति तदा सर्वमपि धनं दासीपुत्रो लभते। यदि परिणीतादुहितरस्तत्पुत्रा वा न सन्ति तत्सत्तायामर्द्धमेव द्विजातयो लभन्ते । दास्यामुत्पन्नानां पित्रिच्छयांऽशाभावेनाप्यर्द्धं दूरत एव समग्रम् शूद्रेणेति विशेषणात् । किन्तु आनुकूल्ये जीव[न]-मात्रलाभ इति भावः । अपुत्रदायग्रहणप्रकारो योगिनाऽभिहितः—

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।
तत्सुता गोत्रजा बन्धुः शिष्याः सब्रह्मचारिणः ॥

( याज्ञ० २-१३५ )

एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥

( याज्ञ. १-१३६ ) इति ।

औरसादिद्वादशपुत्ररहितोऽपुत्रोऽस्मिन्मृते तद्धनं पत्न्यादिषु पूर्वपूर्वाभावे उत्तरोत्तरो गृह्णीयात् । तत्रायं क्रमः सर्वेषु अनुलोम-जमूर्धावसिक्तादिषु प्रतिलोमजसूतादिषु वर्णेषु च ब्राह्मणादिषु वेदितव्यः ।

कुल्येषु विद्यमानेषु पितृमातृसनाभिषु ।
असुतस्य प्रमीतस्य पत्नी तद्धनहारिणी ॥

इति वृद्धगुरुवचनात् । प्रथमं पत्नी धनं गृह्णीयात् । वृद्धमनुना विशेष उक्तः—

अपुत्रा शासनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत्पिण्डं सर्वमंशं लभेत च ॥ इति

सर्वमंशं स्थावरजङ्गमात्मकम् । तथा प्रजापतिरप्याह—

जंगमं स्थावरं हेम रूप्यधान्यरसाम्बरम् ।
आदाय दापयेच्छ्राद्धं माससंवत्सरादिते ॥
पितृव्यगुरुदौहित्रान् भर्तुः स्वशुरमातुलान् ।
पूजयेत्कव्यपूर्ताभ्यां वृद्धाप्यतिथींस्तथा ॥ इति

तथा वृद्धविष्णुः—

"अपुत्रधनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृमातृगामी"ति । तदभावे दुहितरः समानजातीयाः असमानजातीयाश्च भागं गृह्णीयुः । तथा गुरुः—

भर्तुर्धनहरो पत्नी तां विना दुहिता स्मृता ।
अङ्गादङ्गात्संभवति पुत्रवद्दुहिता नृणाम् ।
सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता इति ।

तथा कात्यायनः ऊढानूढासमवाये—

पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी ।
तदभावे तु दुहिता यद्यनूढा भवेत्तथा ॥ इति

तथा—

अपुत्रस्याप्यकुलगा पत्नी दुहितरोऽथवा ।

तदभावे पिता माता भ्राता पुत्राश्च कीर्त्तिताः ॥ इति ।

ऊढास्वपि प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रतिष्ठितैव गृह्णाति । तदुक्तं गौतमेन—"स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च" इति । नास्य वचसो मातृधनविषयता पितृधनेऽपि कृतन्यायस्य तुल्यत्वात् । दुहित्रभावे दौहित्रो धनग्राही । तदाह विष्णुः—

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः ।

पूर्वेषान्तु स्वधाकारे पुत्रा दौहित्रिका मता ॥ इति ।

तथा च मनुः—

अकृता वा कृता वाऽपि या विन्देत्सदृशात्सुतम् ।

पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥

( मनु. ९-१३६ ) इति ।

ननु दुहित्रनन्तरं पितराविति उपादानमयुक्तम् , दुहित्रनन्तरं दौहित्रस्यैव वक्तव्यत्वादिति चेत् ? नैवम् , दुहितरश्चेति चशब्देन दौहित्रस्य समुच्चयात् । ततश्चायं निर्णयः मूलवाक्यानुरूपः । पूर्वमपुत्रे प्रमिते पत्नी साध्वी धनग्राहिणी; तदभावे दुहिता; तदभावे दौहित्रः; दौहित्राभावे पितराविति । अत्राऽपि यद्यपि [अ]विशेषेण पितराविति श्रुतं, तथापि शब्दसामर्थ्यात्पूर्वं मातुरेव धनग्राहिता ततः पितुः । माता च पिता च पितराविति [वि]ग्रहवाक्ये मातुरेव पूर्वनिपातात् । प्रत्यासत्तिश्च पित्रपेक्षया मातुरेवाधिकेति पूर्वं मातुरेव धनग्राहिता युक्तेत्येके सङ्गिरन्ते । अन्ये पुनः प्रकारान्तरमाचक्षते—

अपुत्रधने पत्नी स्वामिनी; तदभावे दुहिता; तदभावे पिता स्वामी; तदभावे मातेति तथाह वृद्धविष्णुः—

"अपुत्रधनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामि तदभावे मातृगामि" इति। तथा कात्यायनोऽपि—

अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि वा।
तदभावे पिता माता भ्राता पुत्राश्च कीर्तिताः॥ इति।

ततश्च पूर्वं पितैव धनग्राहीति। अत्र बहुसम्मतं तदेव युक्तम्। पित्रोरभावश्चेद् भ्रातॄणां स्वामिता। तदुक्तं मनुना—

पिता हरेदपुत्रस्य [रिक्थं] भ्रातर एव वा॥
(मनु. ९—१८५) इति।

[भ्रातृ]ष्वपि अनेकेषु सत्सु सोदर्या एव धनभाजः।
अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्।
(मनु. ९—१८७) इति।

मनुना प्रत्यासन्नानामेव धनभागित्वस्योक्तेः। अनन्तरोऽव्यवहितः। भ्रातॄणामभावे तत्पुत्राणां स्वामित्वं भ्रातृभ्रातृपुत्रसमवाये भ्रातर एव धनभाजो न भ्रातृव्याः। भ्रातृपुत्राणामभावे गोत्रजा धनग्राहकाः। पितामही सपिण्डाः समानोदकाश्च गोत्रजाः। प्रथमं पितामही। ननु—

मातर्यपि प्रमातायां पितुर्माता धनं हरेत्।
(मनु. ९—२१७)।

इति वचनं मात्रनन्तरं पितामह्या धनग्रहणं प्रतिपादयतीति चेत्? नैवम्। तस्य पितामह्या धनसम्बन्धमात्रप्रतिपादकत्वेऽपि क्रमपर(नं)

त्वाभावात् । "अनपत्यस्य स्वर्यातस्य धनः"मित्यादिबहुवचनविरोधापत्तेः । पितामह्या अभावे पितामहः पितृव्यास्तत्पुत्राश्च यथाक्रमं धनं गृह्णन्ति । पितामहसन्तानाभावे[प्र]पितामही प्रपितामहस्तत्पुत्रा वेति सप्तमपर्यन्ता वा । तदाह बृहन्मनुः—

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु निवर्त्तताऽऽचतुर्दशात् ॥
जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते ॥ इति ।

गोत्रजानामभावे बान्धवाः स्वामिनः । बान्धवाश्च त्रिविधा आत्मबन्धवः पितृबन्धवः मातृबन्धवश्चेति ।

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥

( मनुः ? )—

मा(पि)तुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सु(स्मृ)ताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥ इति ।

तथाहि आत्मपितृभगिनीपुत्राः आत्ममातृभगिनीसुताः आत्ममातुलपुत्रा एते आत्मबान्धवाः। पितृपितृभगिनीपुत्राः [पितृमातृभागिनीपुत्राः] पितृमातुलपुत्राः पितृबान्धवाः । मातृपितृभगिनीपुत्राः मातृमातृभगिनीसुताः मातृमातुलपुत्राः मातृबान्धवाः । बन्धवोऽपि आसन्नतरा धनग्राहिणः । आत्मपितृमातृबन्धवो यथाक्रमं [प्रत्यासन्नतम] प्रत्यासन्नतर-प्रत्यासन्नाः ।

बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
प्रत्यासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥

इति गुरुवचनात् । बन्धूनामभावे आचार्यः । तस्याभावे शिष्यः ।

यो यो ह्यनन्तरः पिण्डात्तस्य तस्य धनं भवेत् ।
अत ऊर्ध्वं सकुल्यः स्यादाचार्यः शिष्य एव वा ॥

( मनु. ९–१८७ )

इति मनुवचनात् । शिष्याभावे सब्रह्मचारी: तदभावे श्रोत्रियो ब्राह्मणः "श्रोत्रिया ब्राह्मणास्त्वानपत्यस्य रिक्थं भजेरन्" इति गौतमस्मरणात् । तदभावे ब्राह्मणमात्रम्—

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।

( मनु. ९–१८८ )

इत्युक्तेः । ब्राह्मणधने कदाचिदपि न राज्ञः स्वामिता । क्षत्रियादिधनानान्तु सब्रह्मचार्यभावे राजैव धनग्राही। तथा च स्मरति मनुः–

अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ।
इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृपः ॥

( मनु. ९–१८९ ) इति ।

ननु अपत्यरहितमृतस्य पूर्वं पत्न्या एव धनसम्बन्ध इति उक्तम् । तदसत् । पत्नीसद्भावेऽपि भ्रातॄणां धनसम्बन्धस्य पत्नीनां च भरणमात्रस्योक्तेः । तदाह नारदः—

भ्रातॄणामप्रजाः प्रेयात् कश्चिच्चेत् प्रव्रजेत वा ।
विभजेरंस्ततस्तेन शेषास्ते स्त्रीधनं विना ॥

( ना. स्मृ.दाय २५ )

भरणं चास्य कुर्वीत स्त्रीणामाजीवनक्षयात् ॥

( ना. स्मृ. दाय. २६ )

तथा मनुना—

पिताहरेदपुत्रस्य रिक्थं भ्रातर एव वा ।

( मनु. १८५ ) ।

इति पितुर्भ्रातुश्च धनसम्बन्धोऽभिहितः । श्रूयन्ते चान्यानि बहून्यपि वाक्यानि । अतः कथं पत्न्या एव धनसम्बन्धः? अत्रोच्यते । केनचित् नारदादिभिस्तु संसृष्टानपत्यधनग्रहणे मातृपितृभ्रातृमातामह्यादीनां धनसम्बन्धः तत्पत्नीनां च भरणमात्रं प्रतिपद्यते । ततश्च पत्नी गृह्णातीति एतत् वचनजातं विभक्तभ्रातृस्त्रीविषयमिति ज्ञायते ।

विभक्ते संस्थिते द्रव्यं पुत्राभावे हरेत्पिता ।

भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात् ॥

इति कात्यायनवचनं पत्न्यां व्यभिचारिण्यां पित्रादेरनपत्यधनग्राहित्वप्रतिपादनपरमित्यवसितम् । ते(?)

पत्युर्धनहरी पत्नी या स्याद‌व्यभिचारिणी ।

अपकारपराऽयुक्ता निर्लज्जा चार्थनाशिका ॥

व्यभिचाररता[या स्त्री] स्त्रीधनं न च सार्हति ॥ इति ।

ततः विभक्ता संसृष्टिन्यपुत्रे स्वर्याते पत्न्या एव धनसम्बन्धः पूर्वमित्येव रमणीयम् । भरणमात्रप्रतिपादकनारदवचनञ्च—

अन्यत्र ब्राह्मणात्किन्तु राजा धर्मपरायणः ।

न स्त्रीणां जीवनं दद्यादेष दानविधिः स्मृतः ॥

इति वचनादवरुद्धस्त्रीविषयम् । अन्यथा "माताऽप्यंशं समं हरेत्" "पत्न्यः कार्याः समांशिकाः" "अपुत्रस्य स्वर्यातस्य स्त्री भरणातिरिक्तं धनं लभते" इत्यादिवचनविरोधः। तत्राऽपि जीवनोपयुक्तधनपरत्वे समांशशब्दानर्थक्यापत्तेः । बहुधनविषयत्वे विधेर्वैरूप्यं दोषः । अथवा जीवनोपयुक्तं क्षेत्रांशं नार्हतीति तत्त्वम् । धारेश्वर-श्रीधरप्रभृतयस्तु प्रकारान्तरमाहुः—'नियोगार्थिनी पत्नी अनपत्य(पेत्त)-विभक्तस्य भर्तुर्धनं गृह्णाती'ति। तत्र गौतमः—"पिण्डगोत्रऋषिसम्बन्धा रिक्थं भजेरन् स्त्री वा बीजं लिप्सेत" इति । मनुः—

धनं यो बिभृयात् भ्रातुर्मृतस्य स्त्रियमेव वा ।
सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥

( मनु. ९-१४६ )

कनीयान् ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि ।
समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः ॥

इत्यादीनि विभक्तधनेऽपि भ्रातर्युपरतेऽपत्यद्वारक एव पत्न्या धनसंबन्ध इत्यादिवाक्यानि श्रूयन्ते । इदमसत् । "पत्नी दुहितर" इत्यत्र नियोगाश्रवणात् । न च गौतमवचनादश्रुतनियोगकल्पना, तस्यान्यार्थत्वात् । तथाहि—अनपत्यधनं पिण्डगोत्रऋषिसंबन्धा गृह्णीयुः स्त्री वा गृह्णीयात् सा स्त्री बीजं वा लिप्सेत संयता वा स्यादिति । "धनं यो बिभृयादि"ति मनुवचनं क्षेत्रजस्यैव धनसंबन्धप्रतिपादकमित्यवसीयते न पत्न्या धनसंबन्धमभिधत्ते । अन्यथा मनुकात्यायनवचनाभ्यां स्पष्टो विरोधः स्यात् ।

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।

पत्न्येव दद्यात्तत्पिण्डं सर्वमंशं लभेत च ॥
अपुत्रा शयनं भर्तुः पालयन्ती गुरौ स्थिता ।
भुञ्जीतामरणात् क्षान्ता दायादा भागमाप्नुयुः ॥ इति।

तस्मादसहाय-मेधातिथि-विज्ञानेश्वर-माधवादिनिबन्धालोकनेनास्मदुक्तैव व्यवस्था ज्यायसी सहृदया एवात्र साक्षिभावमनुभवन्ति ।

अथ संसृष्टिनां विभागप्रकारोऽभिधीयते ।

संसृष्टिनां विभागःस्याज्ज्यैष्ठ्यं तत्र न विद्यते ।
येषां ज्येष्ठःकनिष्ठो वा हीयेतांशप्रदानतः ।
गच्छेतान्यतरो वाऽपि तस्य भागो न लुप्यते ॥
सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥

मनुः—

विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥
( मनु ९—२१० ) इति ।

संसृष्टिनं लक्षयति—

विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः ।
पितृव्येणाऽथवा प्रीत्या स तत्संसृष्ट उच्यते ॥

संसृष्टिनामपि काचित्कोऽपि कादाचित्को विषमविभागो गुरुणा दर्शितः—

संसृष्टिनां तु यः कश्चिद्विद्याशौर्यादिना धनम् ।
प्राप्नोति तत्र दातव्यो द्व्यंशः शेषाः समांशिनः ॥ इति ।

इदं च संसृष्टद्रव्यानुरोधेनार्जितेऽपि विभागप्राप्त्यर्थम् । अ-पुत्रसंसृष्टिनोरेव स्वर्थग्राहितोक्ता योगिना—

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्याच्चापि हरेच्चांशं(१) जातस्य च मृतस्य च ॥

( याज्ञ २—१३८ ) इति ।

संसृष्टिनो मृतस्य गतस्य वांऽशं भागं विभागसमयेऽवि-ज्ञातगर्भ-भार्यायां पश्चादुत्पन्नस्य पुत्रस्य इतरः संसृष्टी दद्यात् । पुत्राभावे संसृष्टयेवापहरेद्धनं न पत्न्यादिस्तासां भरणमात्रं कार्यम् ।

भरणं चास्य कुर्वीरंस्तासामा जीवनक्षयात् ।

इति स्मृतेरिति प्रथमचरणार्थः ।

अथ द्वितीयचरणार्थः—सोदरसंसृष्टिनो मृतस्य भागमंशं सोदरः संसृष्टी पश्चादुत्पन्नपुत्रस्य दद्यात् । तदभावे स्वयमेवाहरेत् । यद्वा असंसृष्टिनः सोदरस्य असंसृष्टी सोदर एव भागमिति । ननु संसृष्टिभिन्नोदराऽसंसृष्टिसोदरसमवाये संसृष्टिन एव भाग इति चेत् ? संसृष्टसोदर—भिन्नोदरसंसृष्टिसमवाये विभज्य धनग्रहण-स्योक्तेः । तथाहि—

अन्योदर्यस्तु संसृष्टी नाऽन्योदर्यो धनं हरेत् ।
असंसृष्टयपि यो दद्यात्सोदरो नान्यमातृजः(२) ॥

( याज्ञ २—१३९ ) इति ।

भिन्नोदरसंसृष्टः अन्योदर्यधनग्राही न पुनरसंसृष्टः । सो-

---

( १ ) दद्याद्वाऽपहरेच्चांशमिति याज्ञ० ।

( २ ) असंसृष्टयपि वा दद्यात्संसृष्टो नान्यमातृज इति याज्ञ० ।

दरः [अ]संसृष्ट्यपि सोदरधनग्राही न पुनरन्योदर्यः संसृष्टयेवे-त्यर्थः। उभाभ्यां सोदरभिन्नोदराभ्यां विभज्य धनं ग्राह्यमित्याशयः।

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।

(मनु ९-२११)

इति स्मरणात् ।

वानप्रस्थादिविभागः ।

नैष्ठिकब्रह्मचारिणो धनमाचार्यो न पित्रादिः । उपकुर्वाणकधनं पित्रादयः । वानप्रस्थधनं धर्मभ्रातैकतीर्थी । धर्मभ्राता समाना-चार्यः । एकतीर्थी एकाश्रमी । यद्वा वानप्रस्थधनमाचार्यः । यति धनं सच्छिष्यः । ब्रह्मचारिणः धर्मभ्रातैकतीर्थी । वानप्रस्थयति-ब्रह्मचारिणां धनमाचार्य-सच्छिष्य-धर्मभ्रात्रेकतीर्थिनः क्रमेण । पूर्वपूर्वाभावे उत्तरोत्तरः । धनग्राहिषु पुत्रपत्न्यादिषु एते अनंशा भागरहिताः । क्लीबपतितजडखञ्ज पशून्मत्तजडान्धाऽचिकित्स्य रोगार्ताः । क्लीबादीनां पुत्रा निर्दोषाश्चेत् अंशभागिनः। क्लीबादीनां दुहितरस्संस्कार्या भर्तव्याश्च । अपुत्रा योषितः (१)पुत्रैः(?)पोष्याः । व्यभिचारिण्यो निर्वास्याः प्रतिकूलाश्च ॥

मौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलंकृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः
सारेऽस्मिन् व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥

---

(१) क्लीबादीनामित्यर्थः ।

निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णां कुरुते शुभम् ॥

इति श्रीमल्लक्ष्मीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डन समस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धर श्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे संस्थितिनां त्रिभागः ॥



## अथ स्तेयप्रकरणम् ।

द्रव्यरक्षकराजाध्यक्षादिसमक्षं बलावष्टम्भेन यत् परद्रव्यापहारादिकं क्रियते तत्साहसम् । स्तेयन्तु असमक्षं वञ्चयित्वा परद्रव्यग्रहणम् । यद्वा राजाध्यक्षादिसमक्षं द्रव्यं समुपकृत्य न मयेदमपहृतमिति भिया निह्नुते तत्स्तेयम् । यथोक्तं नारदेन—

उपायैर्विविधैरेषां कल्पयित्वाऽपकर्षणम् ।
सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः ॥
( ना. स्मृ. साह० १७ ) इति ।

तदपि क्षुद्रमध्यमोत्तमद्रव्यापेक्षया त्रिविधम् । मृद्भाण्डासनखट्वा( विद्वा )स्थिदारुचर्मतृणादि शमीधान्यं कृतान्नं क्षुद्रम् । कौशेयवर्जं वस्त्र—गोव्यतिरिक्तपशु—लोहादि मध्यमम् । रत्नकौशेयस्त्रीपुरुषगजवाजिदेवद्विजराजद्रव्यमुत्तमम् । तत्र उपायः ।

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा ।
पूर्वकर्मापराधाच्च तथा चाऽशुद्धवासकः(स) ॥

( याज्ञ० २–२६६ )

लोप्त्रेण अपहृतवाहनभाजनादि[ना] । पूर्वकर्मापराधी प्राक प्रख्यातचौर्यः । अशुद्धः अज्ञातो वासः ।

अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥

( याज्ञ २–२६७ )

परद्रव्यगृहाणां वा प्रच्छका गूढचारिणः ।
निराया व्ययवन्तश्च विनष्टद्रव्य[प्रेष्य]विक्रयाः ॥

( याज्ञ २–२६८ )

नारदः(१)—

अन्यहस्तात्परिभ्रष्टमकामादन्वितं भुवि ।
चौरेण वा प्रतिक्षिप्तं लोचयन् तत्परीक्षयेत् ॥

चोरशंकया धृतमात्मानं शोधयेदित्याचारः । विपक्षे दोषश्रवणात् ।

गृहीतः शंकया चौर्ये नात्मानं चेद्विशोधयेत् ।
दापयित्वा हृतं द्रव्यं(दण्डं) चौरदण्डेन दण्डयेत् ॥

( याज्ञ. २–२६९ ) इति ।

चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ।

( याज्ञ. २–२७० ) इति ।

---

( १ ) ना० स्मृ० नोपलभ्यते ।

नारदः—

साहसेषु य एवोक्तः त्रिषु दण्डो मनीषिभिः ।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात् ॥

( ना. स्मृ. परिशिष्टम् २७ )

एतदुभयमुत्तमद्रव्यविषयम् ।
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥

( याज्ञ० २–२७० ) इति वचनात् ।

अयमत्राङ्कनप्रकारो मनुना दर्शितः—

गुरुतल्पे भगःकार्यः सुरापाने सुराध्वजः ।
स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान् ॥

( मनु. ९–२३७ ) इति ।

एतत्सर्वं दण्डोत्तरकालं प्रायश्चित्तमनिच्छतां द्रष्टव्यम् । नारदः -

गोपदे[१] यस्य लुप्येत तेन चौरः प्रयत्नतः ।
ग्राह्यो दाप्योऽथवा शेषं पदं यदि न निर्गतम् ॥

( ना. स्मृ. परि. १६ )

निर्गते पुनरेतत्स्यात् न चेदन्यत्र पातितम्(२) ।
सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेत् ॥

( ना. स्मृ. परि. १७)

---

( १ ) गोचरे इति ना. स्मृ ।

( २ ) 'निर्गते तु यदा यस्मिन्नष्टेऽन्यत्र न पातयेत्' इति ना. स्मृः।

योगी—

स्वसीम्नि दद्याद्भूयस्तु(१) पदं वा यत्र गच्छति ।

पञ्चग्रामी बहिःक्रोशाद्दशग्राम्यथवा पुनः ॥ (याज्ञ० ३-२९३)

दद्यादित्यनुषङ्गः । अपराधविशेषे दण्डविशेषो व्यासे-(२)नैवोक्तः—

बन्दिग्राहांस्तथा वाजिकुञ्जराणां च(श्चाप) हारिणः ।

प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान् ॥

( याज्ञ. २-२७३ ) इति ।

मनुः—

अग्न्यगारायुधागारदेवतागारभेदकान् ।

हस्त्यश्वरथहर्तॄं( शत्रूंश्च )श्च हन्यादेवाविचारयन् ॥

( मनु. ९-२८० )

योगी—

उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ ।

कार्यौ द्वितीयापराधे करपादेन हीनकौ ॥

( याज्ञ. २-१७४ ) इति ।

वस्त्राद्युत्क्षिप्य हरतीति उत्क्षेपकः । वस्त्रादिबद्धं सु[वर्णादि ] विस्रस्य उत्कृत्य वा योऽपहरति स ग्रन्थिभेदः । तौ करेण सन्दंशेन तर्जन्यङ्गुष्ठेन च हीनौ क्रमात्कर्तव्यौ । द्वितीयापराधे तु करपादयोः

---

( १ ) ग्रामस्तु इति याज्ञ० ।

( २ ) याज्ञवल्कीयमिदं वचनम् ।

छेदः । एतच्च महाद्रव्यविषयम् । अस्मिन्प्रकरणे दण्ड उत्तमसाहस ( ना. स्मृ. साह. ८ ) इति नारदोक्तेः ।

मनुः—

अङ्गुली ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥

( मनु. ९–२७७ )इति ।

जात्यादितारतम्येन दण्डतारतम्यम् । क्षुद्रमध्यमोत्तमद्रव्यहरणे कालदेशवयःशक्तिपर्यालोचनेन दण्डः ।

अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्बिषी ।
षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य तु ॥

( मनु ८–३३७ )

ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत् ।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणवेदिनः॥ (मनु ८-३३८)

इति मनु-स्मरणात्। परिमाणतारतम्येनाऽपि दण्डतारतम्यम् ।

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽप्यधिको वधः ।
शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥

( मनु. ८–३२० )

विंशतिद्रोणकः कुम्भः । तथा—

सुवर्णरजतादीनामुत्तमानां च वाससाम् ।
रत्नानां चैव सर्वेषां शतादभ्यधिके वधः ॥

( ना. स्मृ. परि २७ )

पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ।

शेषेष्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥

( मनु ८-३२२ )

पुरुषाणां कुलीनानां नारीणां च विशेषतः ।

रत्नानां चैव [सर्वेषां]हरणे वधमर्हति ॥

( मनु ८-३१३ ) इति ।

काष्ठभाण्डतृणमृन्मयवेणुवैणवभाण्ड--अस्थिचर्मशाकार्द्रमुख्यानां मूलफलमूलगोरसेक्षु(क्षेम)विकारलवण तैलपकान्नकृतान्न मत्स्यामिषप्रभृतिस्वल्पमूल्यापहारे तन्मूल्यचतुर्गुणो दशगुणो वा दण्डः । अपराधगुरुत्वेन दण्डगुरुत्वम् ।

सन्धिं छित्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ।

तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥

( मनु ९-३७६ ) इति स्मरणात् ।

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।

आददानः परक्षेत्रात् न दण्डं दातुमर्हति ॥

( मनु. ६-३४१ )

तथा—

चणकव्रीहिगोधूमयवानां मुद्गमाषयोः ।

अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेकः पथि स्थितैः ॥

तथैव सप्तमे भक्तं भक्तानि षडनश्नता ।

अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥

( मनु. ११-१६ ) इति ।

मोषकारिणो दण्डमाह नारदः—

शक्ताश्च ये उपेक्षन्ते तेऽपि तद्दोषभागिनः ॥

( ना॰ स्मृ॰ साहस १६ ) इति ।

यदा ग्राममध्ये व(प)धो धनापहरणं वा भवति तदा ग्रामपतेरेव चौरोपेक्षया दोषः। तश्च ग्रामपतिरेव चोरं गृहीत्वा राज्ञे समर्पयेत् । तदशक्तौ धनिने हृतं धनं दद्यात् । यदि ग्रामे चोरपदं निर्गतं यत्र प्रविशति तद्विषयाधिपतिरेव चोरं धनं वाऽर्पयेत् । तथा च नारदः—

गोचरे यस्य मुष्येत तेन चौरः प्रयत्नतः ।

ग्राह्यो दाप्योऽथवा द्रव्यं पदं यदि न निर्गतम् ॥

( ना. स्मृ परि १६ )

निर्गते पुनरेतस्य न चेदन्यत्र पातितम् ।

सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेत् ॥

( ना॰ स्मृ॰ परि १७ ) इति ।

यदा पुनः ग्रामाद्वहिः सीमापर्यन्ते क्षेत्रे मोषो जायते तदा तद्ग्रामवासिन एव दद्युः, यदि सीम्नो वहिश्चोरपदं न निर्गतम्। निर्गते यत्र प्रविशति स एव ग्रामश्चौरार्पणादिकं कुर्यात् । यदा त्वनेकग्राममध्ये क्रोशमात्राद्बहिः प्रदेशे मोषो जायते चोर[पदं च] जनपदसम्मर्दाद् भग्नं तदा पञ्चग्रामी दशग्रामी वा दद्यात् । प्रत्यासत्त्यपेक्षा व्यवस्थितविकल्पः । यदा तु दापितुमशक्तस्तदा राजा स्वयमेव दद्यात् । यथा(?)मोषसन्देहे तु शपथादिना शोधनीयमिति ।

इति स्तेयम्(१) ।

---

( १ ) पुष्पिकाया अभावः पुस्तकद्वयेऽपि ।

## अथ साहसम् ।

बलावष्टम्भेन सहसा यत्कर्म क्रियते तत्साहसम् । तच्च चौर्याद्यवान्तरविशेष एव ।

मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुत्तमञ्चैव साहसं स्याच्चतुर्विधम् ॥

इति वृहस्पतिस्मरणात् । दण्डातिरेकार्थं पृथगभिधानम् । तत्त्रिविधं प्रथममध्यममुत्तमम् । धनं च फलमूलोदकक्षेत्रोपकरणानां भङ्गाक्षेपोपमर्दनाद्यैः प्रथमम् । वस्त्रपश्वन्योदकगृहोपकरणानामुपमर्दनेन द्वितीयम् । विषशस्त्रादिमारणपरदाराभिमर्शनं प्राणावरोधकमुत्तमम् । तत्रोत्तमसाहसे सहस्रावरो दण्डः । मध्यमसाहसे पञ्चशतावरः। प्रथमसाहसे शतावरः । तदुक्तम्—

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैः दृष्टः पञ्चशतावरः ॥

( ना. स्मृ. साह. ७ )

उत्तमे साहसे दण्डः सहस्रावर इष्यते ।
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ॥

( ना. स्मृ. साह ८ )

तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ।

( ना. स्मृ. साह ९ ) इति ।

परद्रव्यापहरणे तन्मूल्याद्द्विगुणं धनम् ।
दण्डः अपह्नवे चतुर्गुणं द्रव्यदण्डः । साहसं कारयितुर्द्वि-

गुणो दण्डः । यश्चैव हतामुक्त्वाऽहंता(?) कारयति स चतुर्गुणं द-
दण्ड्यः । अर्घ्यकोशातिविक्रमकारि–भ्रातृभार्यापहार–सन्दिष्ट-
प्रदात्–समुद्रगृहभेदकृत्–सामन्तशकुन्तप्रभृतिमुख्यापकारकर्तॄणां प-
ञ्चाशत्पणको दण्डः । स्वच्छन्दविधवागामी, अकारणक्लेश-
कर्ता, उत्तमस्पर्शी चाण्डालः, शूद्रप्रव्रजितानां च दैवपित्र्ययोर्भोज-
कः, अयुक्तशपथकर्ता, अयोग्योऽयोग्यकर्मकर्ता, वृषक्षुद्रपशुपुंस्त्वविह-
न्ता, दासीगर्भविनासकर्ता, दासीगर्भपातन उत्तमोऽधमो वा उत्तम-
साहसेन दण्ड्यः । विप्रदुष्टां पुरुषघ्नीमगर्भिणीं सेतुभेदकरीं स्त्रिय-
मप्सु शिलां बध्वा प्रवेशयेत् । विषाग्निपतिगुरुनिजापत्यप्रमापिणीं
विकर्णकरनासौष्ठीं कृत्वा गोभिः सह प्रविसायेत् (?) । गृह–क्षेत्र
वन–ग्राम–खल–दाहकः राजपत्न्यभिगामी कटाग्निना दग्धव्यः ।
अप्रत्ययस्चेत्कार्यदर्शनोत्तरकालं पूर्वविरोधानुसारं राज्ञाऽनुसन्धेयः।
न्यूनमाविक्रयं(धेयं) वा करोति न्यूनाधिक्यकर्ता वा निष्कादेरव्यवहा-
रिकमुद्रितत्वं वा ताम्रादिगर्भत्वं वा यः करोति यश्चैवं जानन्नपि
तैर्व्यवहारयति तावुभौ प्रत्येकमुत्तमसाहसं दण्डनीयौ। यश्चायुर्वेदान-
भिज्ञो वैद्यश्चिकित्सामहं जानामि इति प्रतारयति सोऽपि दण्ड्यः। योऽ
प्यनपराधिनं राजाज्ञया विना बध्नाति बन्धं सोऽप्युत्तमसाहसं
दण्ड्यः । योऽपि अनिर्वृत्तव्यवहारं मुञ्चति सोऽपि दण्ड्यः ।
यो हि वणिक् पण्यस्याष्टममंशं कूटमानेन कूटतुलया वाऽपहरति
असौ पणानां द्विशतं दण्ड्यः । योऽपि कस्तूर्यादिद्रव्यं कूटं कृत्वा
विक्रीणाति सोऽपि दण्ड्यः । कृत्रिमकस्तूरिकादेर्मूल्यभूतपणे न्यूने
न्यूनमल्पपण इति यावत् । तस्मिन् कृत्रिमे विक्रीते पञ्चाशत्पणं

दण्डः । पणमूल्ये शतं द्विपणमूल्ये द्विशतो दण्डः । राजनिरूपितार्थस्य ह्रासं वृद्धिं वा जानन्तो वणिजो मिलित्वा कारूणां रजकादीनां चित्रकारादीनां पीडाकरमर्थास्पदिकं(?)लाभलोभं कुर्वन्तः सहस्रपणं दण्डनीयाः । ये पुनर्देशान्तरादागतं पण्यं हीनमूल्येन प्रार्थयमानात् उपरुन्धन्ति महार्घं च विक्रीणन्ति तेषामुत्तमसाहसो दण्डः । मनुः—

पञ्चरात्रे पञ्चरात्रे पक्षे(पक्षी)मासेऽथवा गते ।
कुर्वीत चैव प्रत्यक्षमर्घसंस्थापनं नृपः ॥

( मनु ८-४०२ ) इति ।

स्वदेशे पण्ये शतपणमूल्ये पणपञ्चकं लाभार्थं गृह्णीयात् । पारदेश्ये तु दशपणान् लाभम् , यस्य पण्यग्रहणदिवस एव विक्रयणा। यस्य पुनः कालान्तरे विक्रयः तस्य कालोत्कर्षाल्लाभोत्कर्षः कल्प्यः। देशान्तरादागते पण्ये देशान्तरगमनागमन–भाण्डग्रहणशुल्कादिस्थानेषूपयुक्तमर्थं पण्यमूल्येन सह मेलयित्वा यथा शतपणमूल्ये पण्ये दशपणो लाभः सम्पद्यते तथा विधेयमिति । उक्तं—

तुलाशासनमानानां कूटकृन्नाण(श)कस्य च ।
एभिस्तु व्यवहर्ता यः स दाप्यो दममुत्तमम् ॥

( याज्ञ. २-२४० )

कात्यायनः—

विना चिह्नैस्तु यत्कार्यं साहसाख्यं प्रवर्तते ।
शपथैः स विशोध्यः स्यात्सर्वपापेष्वयं विधिः ॥

प्रकाशवधकर्ता उपांशुघातकश्च धनं गृहीत्वा हन्तव्यः । ब्रा-

ह्मणव्यतिरिक्तेऽयं दण्डः । ब्रह्मघ्नक्षत्रियादौ "अथ क्षत्रियादीनां ब्राह्मणवधे वधः सर्वस्वहरणं चे"ति स्मरणात् । एकं यदा बहवो हन्युस्तदा हन्तुर्यथोक्तं दण्डः । घातकव्यतिरिक्तानामारम्भक-तत्सहाय—मर्मानुदेशक -आश्रयशस्त्रदातृ-युद्धोपदेशक-दोषानुमोदक-अनिषेधकप्रभृतीनां तत्कार्यकारणशक्त्यनुसारेण तेषां दण्डः ।

आरम्भकृत्सहायश्च दोषभाजौ तदर्धतः ।

इति स्मरणान्मर्मानुदेशकादेरपि दोषलाघवमभिधेयम् ।

अथ वस्त्रविषये योगी—

वसानस्त्रीन् पणान् दण्ड्यो नेजकस्तु परांशुकम् ।
विक्रयावक्रयाधानयाचितेषु पणान्दश ॥

( याज्ञ० २–२३८ )

तथा—अष्टपणक्रीतस्य वस्त्रस्य सकृद्धौतस्य नाशने एकपण-न्यूनं मूल्यं देयम् , द्विर्धौतस्य पणद्वयोनम् , त्रिर्धौतस्य त्रिपणोनम् । चतुर्धौतस्य पणचतुष्टयम् । ततः परं प्रतिनिर्णेजनमवशिष्टं मूल्यं यावद्यावज्जीर्णं तथा तथा कल्प्यम् ।

पितापुत्रविरोधे साक्ष्यादीनां दण्डः । पितापुत्रयोः कलहे साक्ष्यमङ्गीकरोति न पुनः कलहं करोति न पुनः कलहं वारयति स पणत्रयं दण्ड्यः ।

पित्रापुत्रविरोधे तु साक्षिणस्त्रिपणो दमः ।
अन्तरेण तयोर्यः स्यात्तस्याप्यष्टगुणो दमः ॥

( याज्ञ. २–२३९ )

इति स्मरणात् । यश्च पितापुत्रयोः सपणविवादे पणदाने

प्रतिभूर्भवति कलहं वापि वर्धयति स त्रिपणादष्टगुणां चतुर्विंशतिपणान् दण्डनीयः । अन्यत्रापि तुलामानादिषु दण्डः । तुला तोलनदण्डः। मानं प्रस्थादि। नाणकं मुद्राचिह्न(तं....?) निष्कादि एतेषां कूटकृत् देशप्रसिद्धपरिमाणादन्यथा कर्ता ।

[ इति साहसम्(१) । ]

## अथ[दण्ड]पारुष्यम् ।

नारदः—

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥

( ना. स्मृ. द्यूत ४ )

आदिशब्देन रजःपङ्कादि । एतैर्यन्मनोदुःखापादनं स्पर्शनरूपं च तद्दण्डपारुष्यम् । दण्ड्यतेऽनेनेति दण्डार्हो देहः, तेन कृत्वा पारुष्यं विरूक्षीकरणमित्यर्थः । स एवाह—

तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात् ।
अवगोरणनिःशङ्कपातनक्षतदर्शनैः ॥

( ना. स्मृ. द्यूत ५ )

हीनमध्योत्तमानां तु द्रव्याणां समतिक्रमात् ।

---

(१) पुष्पिका नास्ति पुस्तकद्वयेऽपि ।

श्रीण्येव साहसान्याहुस्तत्र कराटकशोधनम् ॥

( ना॰ स्मृ॰ द्यूत ६ ) इति।

अस्य पञ्चविधत्वमाह स एव—

विधिःपञ्चविधस्तूक्त एतयोरुभयोरपि।

पारुष्ये सति संरम्भादुत्पन्नेनूर्ध्वमूद्र्ध्वयोः ॥

स मान्यते यः क्षमते दण्डभाग्यो निवर्तते।

पूर्वमाकारयेद्यस्तु नियतं स्यात्स दोषभाक् ॥

पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥

( ना॰ स्मृ॰ पारु॰ ६ )

द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः परः।

स तयोर्दण्डमाप्नोति पूर्वो वा यदि वोत्तरः ॥

( ना॰ स्मृ॰ पारु॰ १० )

पारुष्यदोषावृतयोर्युगपत्सम्प्रवृत्तयोः।

विशेषश्चेन्न लक्ष्येत विनयः स्यात्समस्तयोः ॥

( ना॰ स्मृ॰ पारु॰ ८ )

श्वपाकमेद(चण्ड)चाण्डालव्यङ्गेषु वधवृत्तिषु।

हस्तिपव्रात्यदासेषु गुर्वाचार्यातिगेषु च ॥

( ना॰ स्मृ॰ पारु॰ १२ )

मर्यादातिक्रमे सद्यो घात एवानुशासनम्।

( ना॰ स्मृ॰ पारु॰ १३ )

याज्ञवल्क्यः—

अ(सा)साक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च।

दण्ड्यो व्यवहारस्तु कूटचिह्न युतो भयात् ॥

( याज्ञ. २–२१२ ) इति ।

साधनविशेषेण दण्डविशेषमाह—

भस्म-पङ्क-रजःस्पर्शे दण्डो दशपणः स्मृतः ।

अमेध्य-पार्ष्णि-निष्ठ्यूतस्पर्शने द्विगुणः स्मृतः ॥

( याज्ञ. २–२१३ )

समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।

हीनेष्वर्धदमो मोहाद्भस्मा(१)दिभिरदण्डनम् ॥

( याज्ञ. २–२१४ ) इति ।

प्रातिलोम्यापराधे एवम्—

विप्रपीडाकरं छेद्यमङ्गब्राह्मणस्य तु ।

उद्गीर्णे प्रथमो दण्डः संस्पर्शेन तदर्धकम् ॥

( याज्ञ. २–२१५ )

मनुः—

येन केन चिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः ।

छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥

( मनु ८–२७९ ) इति ।

आनुलोम्यविषये स एव—

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ॥

परस्परन्तु सर्वेषां शस्त्रे मध्यमसाहसः ॥

( याज्ञ. २–२१६ )

---

( १ ) मोहमदादिभिरिति याज्ञ० ।

पादकेशांशुककरोल्लुञ्चनेषु पणान्दश ।
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥

( याज्ञ. २–२१७ )

शोणितेन विना दुःखं कुर्यात्काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणान् दण्ड्यो द्विगुणं दर्शनेऽसृजः ॥

( याज्ञ. २–२१८ )

एकं घ्नतां बहूनां च यथोक्ताद्विगुणो दमः ।

( याज्ञ. २–२१ ) इति

स्थावरादिविषये स एव—
प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणां च विंशतेर्द्विगुणो दमः ॥

( याज्ञ. २–२२७ )

चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥

( याज्ञ. २–२२८ )

गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ।
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कर्तने ॥

( याज्ञ. २–२२९ ) इति ।

गुल्मा अनतिदीर्घनिबिडलता मालत्यादयः। गुच्छा अवल्लीप्रायाः । क्षुपाः करवीरादयः। प्रतानाः काण्डप्ररोह[रहित]ाः सारिवा

प्रभृतयः । ओषध्यः फलपाकविश्रान्ताः शालिप्रभृतयः । वीरुधः—छिन्ना अपि(थ) विविधं प्ररोहन्ति ता गुडूचीप्रभृतयः ।

[ इति दण्डपारुष्यप्रकरणम्(१)। ]

## अथ वाक्पारुष्यम् ।

वाक्पारुष्ये नारदः—

देशजातिकुलादीनामाक्रोशव्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं तद्वाक्पारुष्यमुच्यते ॥

( ना. स्मृ. पारु १ ) इति ।

उच्चैर्भाषणमाक्रोशः। व्यङ्गमवद्यम्। अस्य त्रैविध्ये दण्डविशेषमाह स एव—

निष्ठुराश्लीलतीव्रत्वात् तदपि त्रिविधं स्मृतम् ।
गौरवानुक्रमात्तस्य दण्डोऽपि स्यात्क्रमाद् गुरुः ॥

( ना. स्मृ. पारु २ )

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं व्यङ्गसंयुतम् ।
पतनीयैरुपाक्रोशं तीव्रमाहुर्मनीषिणः ॥

( ना. स्मृ पारु ३ ) इति ।

निष्ठुराक्रोशे सर्ववर्णविषये दण्डविशेषमाह याज्ञवल्क्यः—

( १ ) पुष्पिकाया अभावः ।

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपं करोति चेद्दण्ड्यः पणानर्धत्रयोदशान् ॥
( याज्ञ २–२०४ ) इति ।

अतिदुर्वृत्तविषये मनुः—

काणं वाऽप्यथ वा खञ्जमन्यं वापि तथाविधम् ।
तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणावरम् ॥
( मनु ८–२७४ ) इति ।

स एव विशेषमाह—

मातरं पितरं जायां श्वशुरं भ्रातरं गुरुम् ।
आक्षारयन् शतं दाप्यः पन्थानं चाददद् गुरोः ॥
( मनु ८—२८५ ) इति ।

सापराधेषु मात्रादिषु निरपराधायां भार्यायामेतद् द्रष्टव्यम् ।

अश्लीलाक्षेपे दण्डमाह—

अभिगन्तास्मि भगिनीं मातरं वा तवेति ह ।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥
अर्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च ।
दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः ॥
( याज्ञ २–२०६ )

प्रातिलोम्यापवादेषु द्विगुणास्त्रिगुणा दमाः ।
वर्णानामानुलोम्येन तस्मादर्धार्धहानितः ॥
( याज्ञ २–२०७ ) इति ।

मनुः—

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥

(मनु ८-२६८) इति ।

गौतमः—'ब्राह्मणराजन्यक्षत्रियवैश्ययो'(?)रिति ।

[इति वाक्पारुष्यम्(१) ।]

## द्यूतसमाह्वयप्रकरणम् ।

द्यूतसमाह्वययोः स्वरूपं नारदः—

अक्षब्रध्नशलाकाद्यैर्देवनं जिह्मकारितम् ।
पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयम् ॥

(ना० स्मृ० द्यूत १)

अक्षः पाशकः । ब्रध्नश्चर्मपट्टिका । शलाका दन्तादिमय्यो दीर्घचतुरस्राः । आद्यग्रहणात् चतुरङ्गादिक्रीडासाधनं करितुरगरथादिकं गृह्यते । एतैरप्राणिभिर्यद् देवनं क्रीडा पणपूर्विका क्रियते तद्द्यूतम् । तथा वयोभिः कुक्कुटादिपक्षिभिः यन्मेषमहिषादिभिः[वा] देवनं तन्मुख्यं पदमित्यर्थः । तथा च मनुः—

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः ॥

(मनु ९-२२३) इति ।

(१) पुष्पिका नास्ति क. ख. पु. ।

योगी—

ग्लहे शतिकवृत्तिस्तु सभिकः पञ्चकं शतम् ।
गृह्णीयाद् धूर्तकितवादितराद्दशकं शतम् ॥

( याज्ञ० २–१९९ )

परस्परसम्प्रतिपत्त्या कितवपरिकल्पितः पणो[ग्ल]ह इत्युच्यते । तत्र ग्लहे तदाश्रया शतिका शतपरिमिता तदधिकपरिमाणा वृद्धिर्यस्यासौ शतिकवृद्धिः । तस्माद् धूर्तकितवात्पञ्चकं शतमात्मवृत्त्यर्थं सभिको गृह्णीयात् । पञ्च पणा आयो यस्मिन् शते तच्छतं पञ्चकम् । जितग्लहस्य विंशतितमं भागं गृह्णीयादित्यर्थः । तथा—

[स]सम्यक् पालितो दद्याद्राज्ञे भागं यथाकृतम् ।
जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमी ॥

( याज्ञ० २–२०० )

य एवं कृतवृत्तिर्द्यूताधिकारी स राज्ञा धूर्तकितवेभ्यो रक्षितः तस्मै राज्ञे यथासंप्रतिपन्नमंशं दद्यात् । तथा [यत् ]जितद्रव्यं तदुद्ग्राहयेत् । बन्धकग्रहणेन आसेधादिना पराजितसकाशादुद्धरेत् । उद्धृतं च जेत्रे जयिने शतिको दद्यात् । तथा क्षमी भूत्वा सत्यं वचो विश्वासार्थं द्यूतकारिणां दद्यात् । तथा—

प्राप्ते नृपतिना भागे प्रसिद्धे धूर्तमण्डले ।
जितं ससभिके स्थाने दापयेदन्यथा नतु ॥

( याज्ञ० २–२०१ )

प्रसिद्धेऽप्रसिद्धेऽवा राजाध्यक्षसमन्विते च सति सभिकसहिते कितवसमाजे सभिकेन शतिकेन राजभागे दत्ते राजा कितवधूर्तमविप्रतिपन्नं जितं पणं दापयेत् । अन्यथा प्रच्छन्नसभि(शति)करहितेऽदत्तराजभागे द्यूते जितं पणं जेत्रे न दापयेत् । यथा—

द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि ।

त एव कितवा एव ।

राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः ।

( याज्ञ० २–२०२ )

कूटैरक्षादिभिः उपधिना च प्रतिबन्धनहेतुना मणिमन्त्रौषधादिना ये दीव्यन्ति तान् श्वपदादिनाङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेत् ।

कूटाक्षदेविनः पापान्राजा राष्ट्राद्विवासयेत् ।
कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः ॥

( ना० स्मृ० द्यू० ६ )

द्यूतं समाह्वयं चैव यः कुर्यात् कारयेत वा ।
तान्सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥

( मनु० ९–२२४ )

इत्यादीनि मनुवचनानि कूटद्यूतादिविषयाणि योजयितव्यानि ।

योगी—

द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ।
एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ॥

( याज्ञ० २-२०३ )

प्रौढश्रीद्विजराजवंशतिलकालङ्कारहीरप्रभुः ।
भारद्वाजकुलानुगः प्रथमया यः शाखयाऽलङ्कृतः ।
श्रीमद्वल्लभसूनुरात्मनिरतः सत्सम्प्रदायाग्रणीः
सारेऽस्मिन् व्यवहारनाम्नि विशदे श्रीमान्दलाधीश्वरः ॥१॥
निजामसाहसाम्राज्यधुरन्धरमहीपतिः ।
श्रीनृसिंहप्रसादेऽस्मिन् सम्पूर्णं कुरुते शुभम् ॥

इति श्रीमत्प्रत्नश्रीनृसिंहचरणयुगुलसरोरुहभ्रमरसकलभूमण्डलमण्डनसमस्तयवनाधीश्वरश्रीनिजामसाहसमस्तसाम्राज्यधुरन्धरश्रीमन्महाराजाधिराजश्रीदलपतिराजविरचिते श्रीनृसिंहप्रसादे व्यवहारसारे द्यूतसमाह्वयं नाम व्यवहारपदम् ।



इति नृसिंहप्रसादे व्यवहारसारःसम्पूर्णः ॥



# परिशिष्टम् ।

पृ० ३ पं० १८ 'साध्यमूलोऽत्र यो वाद' इत्यपरार्कधृतः पाठः ।

पृ० ७ पं० १३ 'विप्रो धर्मद्रुमस्यादिः स्कन्धशाखे महीपतिः ।

सचिवाः पत्रपुष्पाणि फलं न्यायेन पालनम् ॥

यशो वित्तं फलरसो भोगेन्द्रग्रहपूजनम् ।

अजेयत्वं लोकपङ्क्तिः स्वर्गे स्थानं च शाश्वतम्'॥

इति वी० मित्रोदये ।

पृ० १२ पं० १४ तद्धि ..... आवेदयति'—

तथा च मनुः—

नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः ।

नच प्रापितमन्येन ग्रसेतार्थं कथञ्चन ॥ ८।४३ इति ।

प्रकीर्णके तु—

प्रकीर्णके पुनर्ज्ञेयो व्यवहारो नृपाश्रयः । इति नारदोक्तम्,

एवं—

अष्टादशपदो वादो विचार्यो विनिवेदितः ।

सन्त्यन्यानि पदान्यत्र तानि राजा विशेत्स्वयम् ॥

षड्भागहरणं शुद्धं समयातिक्रमो विधिः ।

वधः संहरणं स्तेयमासेधाज्ञाव्यतिक्रमः ॥ इति जीमूतवाहन

पठितं बृहस्पतिवचनं च एतदपवादः ।

प्रकीर्णकं तु—

'राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा'

इत्यारभ्य—

'न दृष्टं यच्च पूर्वेषु तत्सर्वं स्यात्प्रकीर्णकम्'

इति नारदेन दर्शितम् ।

पृ. १८ पं. ११–'तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजा अन्यथा करोति, तदाऽसौ निवारणीयोऽन्यथा दोषः । उक्तं च कात्यायनेन—

अन्यायेनानुयान्तं तं येऽनुयान्ति सभासदः ।
तेऽपि तद्भागिनस्तस्माद् बोधनीयः स तैर्नृपः ॥इति'(मि.) ।

अत्र सभायामन्यायवादी राजा न विरोद्धव्यः, मर्यादातिक्रमापातात्; किन्तु कालान्तरे स तत्त्वं बोधनीयः [ स्मृ. चं. ] । यद्वा सभायामपि राजा शनैर्विनयेन बोधनीयः । एतेन सकलविरुद्धवचनसङ्गतिर्भवति । अत एवोपरि 'स तै' रित्यस्यस्थाने शनैरिति पाठः [ स्मृ. चं. ] आदृतः ।

पृ. १९ पं. २०–त्रय इति । न तु ततो न्यूनाः, वक्ष्यमाणबृहस्पतिवचनात् । 'सप्राड्विवाकः सामात्य' [ पृ. २३ ] इत्यादि कात्यायनवचनाद्ब्राह्मणातिरिक्ताः सभ्या अपि कर्तव्याः । ते च नियुक्ताः; ब्राह्मणास्त्वनियुक्ताः । एवं लोकरञ्जनार्थं कतिपयैर्वणिग्भिरप्यधिष्ठितं सदः कर्तव्यम् [ मि. ] । एषा सभा तु मुख्यं व्यवहारदर्शनस्थानम् । अन्यानि च—

'आरण्यकाः स्वकैः कुर्यु' रित्यादीनि वी. मि. द्रष्टव्यानि । इयं च कौटिल्याद्युक्तमन्त्रिपरिषदः [ अर्थशा. १—१५ ] याज्ञवल्क्योक्तपर्षदश्च [१–३] भिन्नैव । तयोः क्रमेण राज्यकार्य–धर्म [ आचारादि ] कार्यविषयत्वात् ।

पृ. २० पं. १७—

तथा च स्मृ. चन्द्रिकायां व्यासः—

प्रतिष्ठिता पुरे ग्रामे चला नामाप्रतिष्ठिता ।

मुद्रिताध्यक्षसंयुक्ता राजयुक्ता च शासि(स्त्रि)ता ॥ इति ।

पृ. २६ पं. १३ 'षाड्गुण्यस्य प्रयोगश्चाप्रयोगः कार्यगौरवात्' इति शुद्धःपाठः । एतदन्ते–

'दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज' । इति ।

'एवञ्च सन्धिविग्रहादिदृष्टार्थविषया स्मृतिरर्थशास्त्रमित्यर्थः'स्मृ.चं ।

पृ. २६ पं. १७—'अत्रार्थशास्त्रं धर्मशास्त्रान्तर्गतमेव राजनीतिप्रतिपादकं ग्राह्यमौशनसाद्यर्थशास्त्रस्य 'धर्मशास्त्रानुसारेण' त्यनेनैव तिरस्कृतत्वात्' [मि.] । परा० माधवस्तु तदप्यङ्गीकृत्य तत्र धर्मशास्त्राविरुद्धांशस्याऽऽदर्तव्यत्वमाह ।

कौटिल्यस्तु–शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित् ।

न्यायस्तत्र प्रमाणं स्यात्तत्र पाठो हि नश्यति [धर्मस्थी.]

इति प्रपठ्य अर्थशास्त्रमेवादर्तव्यं विरोधे इत्युक्तवानिति केचित् । परन्तु तत्र धर्मन्यायशब्देन धर्मानुकूललोकाचारस्यैव ग्रहणात् ( See T. Ganapati Sastri's Com. ) तद्विरोधे वचनत्या-

गस्य साम्प्रदायिकैरप्यभ्युपगतत्वान्न तन्मतमतिपुष्टं भवति । धर्मशास्त्रस्यादृष्टार्थप्रतिपादकत्वादर्थशास्त्रस्य च दृष्टार्थकत्वाद्विषयभेदाद्विरोधाभावः [ सरस्वती वि. व्य. का. ] । सत्यपि च दृष्टादृष्टार्थानुसरणे अन्योन्यविषये अन्योन्यं बाध्यतामित्यतिसङ्क्षेपः ।

पृ. ३५ पं. १०—अपरार्कस्तु—

'पूर्वपक्षश्चोत्तरं प्रत्याकलितमेव च'

इति कात्यायनवचनात्प्रत्याकलित।ख्यं तृतीयं पादमुक्त्वा चतुर्थं क्रियापादमाह । मिताक्षराकृदादयस्तु प्रमाणानां पौनःपुन्येन परीक्षणस्यैव प्रत्याकलितत्वात् भाषोत्तरक्रियासिद्ध्यात्मकपादचतुष्टययुक्तत्वमेवाहुः । तथा च बृहस्पतिवचनम्—

पूर्वः पक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः ।

क्रियापादस्तृतीयस्तु चतुर्थो निर्णयस्तथा ॥ इति [वी.मि] ।

पृ. ३६ पं. ५ 'क्रिया नाम प्रमाणम्' [ स्मृ. चं. ] ।

पृ. ३६ पं. ८ नवधेति । पञ्चप्रकारं दैवं स्यादिति कात्यायनः ।

एतन्नावधारणमिति स्मृ. च. ।

पृ. ७३ पं. ३ ।

दिव्यपद्धतिरियं (ऋ. १, १५८, ४), [ पञ्च. ब्रा. १४, ६, ६ ], [छा. उ. ६, १६], [ कौशिकसू. ५२, ८ ] [ शतपथ ११, २, ७ ] इत्यादि वेदेषु दृश्यते । एवं पाश्चात्य—यवनGreece देशेषु विविधानि दिव्यानि पुराकाले प्रचलितान्यासन् । पारसिकानां ( Avesta ) धर्मग्रन्थे त्रयस्त्रिंशद्दिव्यानामुल्लेखः ( प.ज्ञा.को )

द्वन्द्वयुद्धेन नदीप्रवाहादिना वा पाश्चात्यदेशेषु तत्त्वनिर्णयपद्धतिरासीत्पुरा । तथापि भारतीया दिव्यव्यवस्था महर्षिभिः स्वतपःसाक्षात्कृतसत्यधर्मावलम्बना सुव्यवस्थिता चासीदिति धर्मशास्त्ररहस्यविदां नाविदितम् । कालेनैषा व्यवस्था ह्रासमुपगता इति 'जलविषयोरुत्सन्नानुष्ठानत्वात्तद्विधिमनाख्याय कोशविधिरुच्यते' [ स्मृ. चं. ] 'उत्कलादिषु क्वचिद्देशेषु जलविधेरेव प्रामाणिकत्वेन व्यवह्रियमाणत्वात् । शूरसेनमागधादिषु क्वचिद्देशेषु विषविधेरेव प्रामाणिकत्वेन परिगृहीतत्वात्' [सरस्वती वि.व्य.का.] इत्यादि दर्शनेन ज्ञायते । त्रयोदशतमशताब्द्यां ( 1201 A. D. ) Belgaum Dist. उपलब्धे शिलालेखे भूमिविवादे फालदिव्यमनुष्ठितमित्युल्लेखः 'काणे' महाशयेनोद्धृतः व्य. मयूखपरिशिष्टे । सम्प्रति तु न दिव्यैर्निर्णयः । शपथादयस्तु सन्ति तत्र तत्र ।

पृ. ७३ पं. ११–'सहस्रादिपरिमाणद्रव्यविषयो महापातकविषयो वाऽऽक्षेपो महाभियोगः' [अपरार्कः २. ९५]

पृ. ७३ पं. १४–'अभियुक्तस्य दिव्यतो दोषभावेऽहं दोषवान्दोषानुरूपस्य दण्डस्य दातेत्यभ्युपगम इति शीर्षम्' [अपरार्कः २.९५] ।

पृ. ८५ पं. ३–'अष्टमं सावित्रं नवमं सर्वदैवत्यम्' इति व्य.म;मि.

पृ, ८३ पं. ९–"तुलारोपितं च नरं विनाडीपञ्चककालं शतत्रयगुर्वक्षरोच्चारणायोग्यं 'मा कान्ते पक्षस्यान्ते पर्याकाशे देशे स्वाप्सीः । कान्तं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत्स्युत्क्षामः प्राटश्चे

तश्चेतो राहुः क्रूरः माद्यात् । तस्मात् ध्वान्ते हर्म्यस्यान्ते श्वय्यै कान्ते कर्तव्या' इति पञ्चधा पाठयोग्यपञ्चपलात्मकं यावत् ताव-त्स्थापयेत्'' इति दिव्यतत्त्वे रघुनन्दनभट्टाचार्या उदाजहुः ।

पृ. १२५ पं. ३—अत्र नारदेन त्रिविधा पुनर्भूः चतुर्विधा च स्वैरिणी क्रमशः प्रतिपादिता । लेखकप्रमादात्तु अत्र व्यत्यस्तः क्रमः । तत्र 'कन्यैवाक्षतयोनिर्ये' त्यादिनोक्ता प्रथमा पुनर्भूः ।

द्वितीया च—कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहमियात्सा द्वितीया प्रकीर्तिता ॥
[ ना. स्मृ. स्त्रीपुं. ४७ ] इत्युक्ता ।

तृतीया पुनर्भूः—'असत्सु देवरेष्वि' त्याद्युक्तलक्षणा ।

एवं प्रथमा स्वैरिणी—स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।
कामात्सा संश्रयेदन्यं प्रथमा स्वैरिणी तु सा ।
[ ४९ ] इत्युक्ता ।

द्वितीया तु—मृते भर्तरि सम्प्राप्तान्देवरादीनपास्य या ।
उपगच्छेत्परं कामात्सा द्वितीया प्रकीर्तिता ॥
[ ५० ] इत्युक्ता ।

एवं तृतीया स्वैरिणी–'प्राप्ता देशाद्धनक्रीते'त्युक्ता । तत्र 'सा तृ-तीये'ति पाठो युक्तः ।

ततोऽन्त्या सा–'देशधर्मानपेक्ष्ये'त्यादिनोक्ता । तत्र ना. स्मृ. चतुर्थ-चरणः–
'अन्त्या सा स्वैरिणी स्मृता' इत्यस्ति ।

पृ. १२५ पं. ११—

अत्र—'अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् ।

ऋणं तयोः पतिकृतं दद्याद्यस्तामुपाश्रयेत् ॥' इति

मिताक्षराधृतं नारदीयवचनं लेखकप्रमादात्त्रुटितम् ।

पृ. १७४ पं. ८ अस्य अत्यन्तदूरदेशस्थस्वामिविषयतेति स्मृ. चं ।

पृ. १७४ पं. ९ अत्र 'राजा त्र्यब्दं निधापयेत्' एवं 'अर्वाक्त्र्यब्दात्' इत्येव मनुपाठः आदर्तव्यः । 'अर्वाक्सम्वत्सराद्' इत्येतस्य तु—

'शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।

अर्वाक्सम्वत्सरात्स्वामी हरेत परतो नृपः [याज्ञ.२.१७३]'

इति याज्ञवल्कीय वचनगतत्वेन तद्विषयत्वम् । एतद्विषयकमेव 'प्रनष्टस्वामिकमधिगम्य राज्ञे ब्रूयुर्विख्याप्य सम्वत्सरं राज्ञा रक्ष्यः' इति गौतमवचनम् । 'अब्राह्मणस्य प्रणष्टस्वामिकं सम्वत्सरं परिपाल्ये'त्यादि बालम्भट्टीयव्याख्योक्त—बोधायनवचनं च । एतेन गौतमवचनगतसम्वत्सरमित्येकवचनमविवक्षितं मनूक्तत्र्यब्दपर्यन्तरक्षणपरवचनविरोधादिति मिताक्षरोक्तमपास्तम् ।

पृ. १७४ पं. १० 'एतदपि स्वामिन्यनागते त्र्यब्दादूर्ध्वं व्ययीकरणाभ्यनुज्ञापरम् । ततः परमागते तु स्वामिनि व्ययीभूतेऽपि द्रव्ये राजा स्वांशमवतार्य तत्समं दद्यात्' इति मि. ।

अतएव 'हरेते' त्यस्य परद्रव्यापहारनिषेधविषयता न । किन्तु हरेतेत्यस्य पृथङ् निधाय स्थापयेदित्यर्थः । एवं चावधिमतिक्र-

म्यागतायाऽपि स्वामिने रूपसंख्यादिभिर्भावितं यथाष्टाधिगतं देयमेव' इति स्मृ. च. ।

पृ. १७४ पं. १५–

मिताक्षराकारस्तु अत्र–'तत्र वर्षत्रयपर्यन्तमवश्यं रक्षणीयम् । तत्र यदि सम्वत्सरादर्वाक् स्वाम्यागच्छेत्तदा कृत्स्नमेव दद्यात् । यदा पुनः सम्वत्सरादूर्ध्वमागच्छति, तदा किञ्चिद् भागं रक्षणमूल्यं गृहीत्वा शेषं स्वामिने दद्यात् । यथाह–'आददीताथे'ति । तत्र प्रथमे वर्षे कृत्स्नमेव दद्यात् । द्वितीये द्वादशं भागं, तृतीये दशमं, चतुर्थादिषु षष्ठं भागं गृहीत्वा शेषं दद्यात् । राजभागस्य चतुर्थोऽंशोऽधिगन्त्रे दातव्यः । स्वाम्यनागमे तु कृत्स्नस्य धनस्य चतुर्थमंशमधिगन्त्रे दत्त्वा शेषं राजा गृह्णीयात् ।' इति व्यवस्थामाह ।

पृ. १७४ पं. १७—

एतच्चैकशफादावधिगन्त्रे देयं निरूपयितुमुक्तं कैश्चिदिति स्मृ.च.।

पृ. १७५ पं. १५–

'वणिग्वीथीपरिगतम्=वणिग्वीथ्यां प्राप्तम् । एतेन रहःक्रयो नास्तीति दर्शितम् । विज्ञातं राजपूरुषैरित्यनेन अप्रकाशक्रयो नास्तीति दर्शितम् । अविज्ञाताश्रयात्=अविज्ञातस्थानकात् । यद्रहःक्रयादिरहितं सदविज्ञाताश्रयात्क्रीतं मृतविक्रेतृकं वा तदर्धमूल्यं दत्त्वा ग्राह्यमित्यर्थः' इति वी. मि. ।

पृ. १७५ पं. १९–'तथाचापरिपालन' मित्येव पाठः समीचीनः ।

पृ. १७६ पं. २–

'अस्वामिविक्रेतुरिव अस्वाम्यदत्तं स्वाम्यनुमतिमन्तरेणोपभु-ञ्जानस्ये'ति वी० मि०।

पृ० १७६ पं० ११ एतदुत्तरार्धस्तु—

'त्रयोदशं त्वनड्वाहमश्वं भूमिं च षोडश' इति वी० मि०।

एतदग्रे च—

नौकामश्वञ्च धेनुञ्च लाङ्गलं कर्मिकस्य च।
बलात्कारेण यो भुङ्क्ते दाप्यश्चाष्टगुणं दिने॥

इत्यधिकं वी० मि०।

पृ० १७८ पं० ८—'स्थावरं सत्त्वयं दाप्य' इति तु समीचीनम्। एतच्च याचितविषयमिति स्मृ० च०।

पृ० १८० पं० २३

'पण्यं तस्ये'त्यस्य स्थाने 'त्याज्यं तस्ये'ति स्मृ० च०।

पृ० १८२ पं० १

'क्रीत्वानुशये कालभेदः, परभुक्तत्रासो नियमः, धातुक्षयः, तान्तव [संस्कार] श्चेति चत्वारो भेदाः' इति पुरस्तात् [ पृ० १५ ] उक्तत्वात्।

पृ० १८५ पं० १४

'पण्यं क्रीत्वे'त्यस्य स्थाने 'काले चेदन्यथे'ति. स्मृ० चं.

पृ० १८६ पं० १५—'पाखण्डिनो वेदमार्गविरोधिनो वाणि-ज्यादिकराः। नैगमास्तदविरोधिनः' इति व्य० म०।

'ये नानाजातीयाः सह वाणिज्यार्थमधिगच्छन्ति ते नैगमाः'

इत्यपरार्कः ।

पृ. १८७ प. १२ 'मुक्तभाव्या' इति पाठः । मुक्तभाव्यास्त्यक्त-राजदेया इति वि. रत्ना. ।

पृ. १८७ पं. १५

'श्रौतस्मार्तधर्मानुपमर्देन समयान्निष्पन्नो यो धर्मो गोप्रचारोदक-रक्षणादेवगृहपालनादिरूपः सोऽपि यत्नेन पालनीयः । तथा राज्ञा च निजधर्माविरोधेनैव यः सामयिको धर्मो यावत्पथिकं भोजनं देय·········मित्येवंरूपः कृतः सोऽपि रक्षणीयः' इति विज्ञानेश्वरः ।

समयात्=पारिभाषिकधर्मेण व्यवस्थानादिति बालम्भट्टी ।

पृ. १८८ पं. १०

'नानाजातीयानामेकजातीयं कर्म कुर्वतां सङ्घाताः श्रेणयः । तेषामेव भिन्नजातीयं कर्म कुर्वतां सङ्घाः पूगाः । व्राताः=ज्ञातिस-म्बधिबन्धूनां सङ्घाताः । त एव कुलानीत्यप्युच्यन्ते' इति व्य. म. ।

वि. रत्नाकरे कातीयवचनानि तु—

नानापौरसमूहस्तु नैगमः परिकीर्तितः ।
नानायुधधरा व्राताः समवेताः प्रकीर्तिताः ॥
समूहो वणिगादीनां पूगः सम्परिकीर्तितः ।
शिल्पोपजीविनो ये तु शिल्पिनः परिकीर्तिताः ॥
आर्हत सौगतानां तु समूहः सङ्घ उच्यते ।
चाण्डालश्वपचादीनां समूहो गुल्म उच्यते ॥
गणपाषण्ड पूगाश्च व्राताश्च श्रेणयस्तथा ।

समूहस्थाश्च ये चान्ये वर्ग्याख्यास्ते बृहस्पतिः ॥ इति ।

पृ. १९३ पं. ८–

'समन्तात् परितोऽनन्तरग्रामादिभोक्तार' इत्यपरार्कः ।

'विप्रतिपन्नसीमाकस्य ग्रामादेश्चतसृषु दिक्षु अनन्तरग्रामादिभोक्तारः संसक्तकास्त एव सामन्ता इत्यर्थः' इति स्मृ. च. ।

मिताक्षराकृदपि—

'ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हि ॥' इति

कात्यायनवचनानुसारेण समन्ताद्भवग्रामादिगतपुरुषाः सामन्ताः उच्यन्ते इत्याह ।

पृ. २०६ पं. १८

अत्रापरार्के बृहस्पति वचनानि—

पापमूलं सङ्ग्रहणं त्रिप्रकारं निबोधत ।
बलोपाधिकृते द्वे तु तृतीयमनुरागजम् ॥
तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम् ॥
अनिच्छन्त्या यत्क्रियते सुप्तोन्मत्तप्रमत्तया ।
प्रलपन्त्या वा रहसि बलात्कारकृतं तु तत् ॥
छद्मना गृहमानीय दत्त्वा वा मद्यकार्मणम् ।
सम्भोगः क्रियते यस्यास्तदुपाधिकृतं विदुः ॥
अन्योन्यचक्षूरागेण दूतीसम्प्रेषणेन च ।
कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम् ॥ इति ।

कार्मणं=वशीकरणम् ।

एवमपरो व्यासोक्तो विशेषः—

सङ्ग्रहस्त्रिविधो ज्ञेयः प्रथमो मध्यमस्तथा ।
उत्तमश्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥
अदेशकालसम्भाषा अरण्ये च परस्त्रिया ।
अपाङ्गप्रेक्षणं हास्यं पूर्वं सङ्ग्रहणं स्मृतम् ॥
प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ।
प्रलोभनं चान्नपानैर्मध्यमः सङ्ग्रहः स्मृतः ॥
शय्यासने विविक्ते तु परस्परसमाश्रयः ।
केशाकेशिग्रहश्चैव ज्ञेय उत्तमसङ्ग्रहः ॥ इति ।

तत्र—

त्रयाणामपि चैतेषां प्रथमो मध्य उत्तमः ।
विनयः कल्पनीयः स्यादधिको द्रविणाधिके ॥

इत्यपरार्के ।

पृ. २१२ पं. ८—

अत्र मिताक्षरायां 'स्वामीरिक्थक्रयसम्विभागे'त्यादिगौतम सूत्रस्वरसात्, 'योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धन' मित्यादिमनूक्तस्तेयातिदेशात् , अन्यस्वस्यान्येनापहारे परीक्षकाणां स्वामिविप्रतिपत्त्यापत्तेश्च स्वत्वं शास्त्रीयमेवेति पूर्वपक्षयित्वा तल्लौकिकमेवेति सिद्धान्तितम् । गौतमाद्युक्तवचनानां पुरुषार्थार्जननियमविधित्वान्न तत्स्वारस्यभङ्गप्रसङ्ग इति चोक्तम् । अत एवासत्प्रतिग्रहाद्यु-

पार्जितेऽपि अर्जकपुत्राणां दायहरत्वं लोकसिद्धं सङ्गच्छते ।

शास्त्रैकसमधिगम्यस्वत्ववादिनः स्मृतिसङ्ग्रहकारस्य कारिकाः—

वर्त्तते यस्य यद्धस्ते तस्य स्वामी स एव न ।
अन्यस्वमन्यद्धस्तेषु चौर्याद्यैः किं न दृश्यते ॥
तस्माच्छास्त्रत एव स्यात्स्वाम्यं नानुभवादपि ।
अस्यापहृतमेतेन न युक्तं वक्तुमन्यथा ॥
विदितोऽर्थागमः शास्त्रे तथाऽर्वाणा पृथक् पृथक् ॥

इति [ वी. मि. ]

एतच्च स्वत्वस्य लौकिकत्वं वीरमित्रोदय–स्मृतिचन्द्रिका–व्यवहारमयूखकारादयोऽप्यङ्गीकुर्वन्ति । धारेश्वर–जीमूतवाहनादयस्तु शास्त्रीयस्वत्ववादिनः ।

पृ. २१२ पं. १६—

सप्रतिबन्ध इत्यादि । एतच्च मिताक्षराद्यनुसारेण । जीमूतवाहनस्तु सर्वमेव दायं सप्रतिबन्धं मत्वा पितरि योग्ये जीवति पुत्रस्य तद्धनग्रहणाधिकाराभावमेवाङ्गीकरोति । एतच्च पित्रर्जितविषये। पारम्परिके तु पितुरिच्छयैव विभागो न पुनः स्वातन्त्र्येणेति। मिताक्षरा स्वस्य सतो विभागमाह । दायभागस्तु विभागात्स्वत्वं न जन्मतः इति निष्कर्षः ।

पृ. २२३ पं. १८–एवञ्च स्वातन्त्र्यमात्रं निषिद्धयते न पुनः स्वत्वम् [ मि. ] ।

पृ. २१४ पं. १६

कालत्रयं चैतन्मिताक्षरानुसारेण । जीमूतवाहनस्तु 'तस्मात्पतितत्वनिःस्पृहत्वोपरमैः स्वत्वापगम इत्येकः कालः । अपरश्च सति स्वत्वे तदिच्छातः इति कालद्वयमेव युक्त'मित्याह ।

पारिजातस्तु 'जीवत्येव पितरि यदा पितुर्विभागेच्छा स तावदेकः । निवृत्तरजस्कायां मातरि स्त्रीसुखानभिलाषिणि द्रव्यनिःस्पृहे च पितरि तदनिच्छायामपि पुत्रेच्छयाऽन्यः । सजस्कायामपि मातरि अनिच्छत्यपि पितरि तस्मिन्वृद्धे अधर्मवर्तिनि अविचिकित्स्यरोगग्रस्ते वा यदि पुत्रेच्छा सोऽन्यतरः । पितृमरणानन्तरमपर' इति कालचतुष्टयं प्राह ।

पृ. २१५ पं. १० ।

एतच्च मिताक्षराद्यनुसारेण । दायभागे जीमूतवाहनस्तु—'अस्मन्मते तु इच्छया विभजेदिति स्वोपात्तधनविषयम् । श्रेष्ठांशता समानांशतयोस्तु पैतामहधनगोचरत्व'मित्याह ।

पृ. २१७ पं. ३—

'यत्किञ्चित्=असारमपि...... तत्पुत्रादीनां दायजिघृक्षा मा भूदिति' [ मि ] ।

पृ. २२० पं. १६—

यथा—

पिता

| ज्ये. पुत्रः | म. पुत्रः | क. पुत्रः |
|---|---|---|
| पुत्रः १ | पुत्रौ द्वौ २ | पुत्राः ३ |

अत्र न प्रतिपौत्रं पितामहधने प्रातिस्विक Per capita भाग कल्पना; किन्तु सर्वस्य धनस्य भागत्रयं कृत्वा ततः स्वस्वपितृभाग- पर्याप्ते धने एव क्रमेण ज्येष्ठपुत्रः प्रथमं तृतीयांशं, मध्यमस्य पुत्रौ स्वपित्रंशं द्वेधा विभज्य, तथा कनिष्ठस्य पुत्राः स्वपितृभागं त्रेधा- विभज्य Per Stirpes गृह्णीयुः ।

एवं स्त्रीधनविषये अनेकमातृका दुहितरस्तत्पुत्र्यो वा स्वस्वमा- तृभागानुसारेणैव धनग्राहिण्यो भवन्ति ।

एतदतिरिक्तेषु स्थलेषु प्रातिस्विक Per Capita एव विभागः ।

पृ॰ २२१ पं॰ २२.

प्रपौत्रपुत्रः जीवति पितृव्य–तत्पुत्रपौत्रप्रपौत्रान्यतमे न स्वपितुः प्रपितामहस्य धनग्रहणेऽधिकारीत्यर्थः ।

यथा— पिता (मृ॰)

| | | |
|---|---|---|
| १ [ अ ] पुत्रः [ मृतः ] | | पुत्रः [ ब ] |
| २ पौत्रः [ " ] | | पौत्रः |
| ३ प्रपौत्रः [ " ] | | प्रपौत्रः |
| ४ तत्पुत्रः | | |

[अ] पुत्रे मृते तत्पुत्रः [२] पौत्रो [३] वा [ब]पु- त्रात्तत्पुत्राद्वा [अ] पुत्रस्य [ पितुः पितामहस्य वा ] भागं गृह्णी- यात् । किन्तु [अ] पुत्रस्य पौत्रः मूलतः चतुर्थः जीवति [ब] पुत्रे तत्पुत्रपौत्रयोर्वा न गृह्णीयादित्यर्थः । पुत्र [ब]–पौत्र–प्रपौ-

ग्राभावे तु सोऽपि लभत एवेत्यर्थः' व्य. म. ।

पृ. २२३ पं. ४ 'यदपि नोद्धरेद्धि' त्यस्य स्थाने—

'यदि पितोद्धरे' दिति मिताक्षरोक्तः पाठः साधुः ।

प्रमादात्तु 'क' 'ख' पुस्तकयोरसमीचीनः पाठः ।

पृ० २२५ पं. ७

अर्धांश इति ।

'सधना तु यावता स्वधनस्य पुत्रांशसमभागता भवति तावदेव हरेदित्यर्थः । अंशाधिकधनायास्तु नांशः' इति व्य. म. ।

पृ. २२७ पं. ८—

एवं—'ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्' इति मनुवचन [ मनु ९।१५५ ] मपरिणीतशूद्रापुत्रपरमिति व्य. म. । मिताक्षराकृता तु अस्य निषेधस्य पितृप्रसादलब्धधनकपरिणीतापुत्र विषयकत्वमङ्गीकृतम् ।

तथा—अनपत्यस्य शुश्रूषुर्गुणवान् शूद्रयोनिजः ।
लभेत जीवनं शेषं सपिण्डाः सममाप्नुयुः ॥

इति बृहस्पतिवचनं द्विजातीनामपरिणीताशूद्रोत्पन्नपुत्रविषयमिति दा. भा. ।

पृ, २२८ पं, २०—

एवञ्च 'अनूढानां च कन्यानां वित्तानुरूपेण संस्कारं कुर्यात्' इति विष्णुवाक्यदर्शनाच्चतुर्थांशदानमुपलक्षणम् । यावता संस्कारो भवति तावत्येव तात्पर्यमिति हलायुधमतम् । युक्तं चैतत्कर्तव्यसं-

स्कारस्यौचित्यात् ।' इति वि. रत्नाकरादयः ।

एवं जीमूतवाहनोऽपि 'भगिनीनां संस्कार्यतामाह नाधिकारिता' मिति मनुते ।

'अतो दायभाक्त्वमसंस्कृतकन्यानां नास्तीति' परा. मा. ।

पृ. २२६ पं. १३–

अत्र 'संस्कारा जातकर्माद्या उपनयनान्ता विवक्षिताः' । अवश्यकार्या इत्यभिधानात् । विवाहादिसंस्कारस्य तु नैष्ठिकादिपक्षान्तरदर्शनादवश्यकार्यत्वाभावात्संस्कारशब्दस्य च सङ्कोचोऽत्र विवक्षित इत्यनवद्यम् । कन्यकानां तु विवाहान्ताः संस्कारा उपनयनरहिताः' इति स्मृ. च. ।

पृ. २३० पं. १३–

अत्र सर्वत्र पितृपदमविभक्तोपलक्षणमिति [ स्मृ. च. ] ।

केचित्तु प्राचीननिबन्धकृदङ्गीकृतवचनान्तरैकवाक्यत्वापरपर्यायं समन्वयपथमनादृत्य निरुपाधिकस्यैव विद्याधनमात्रस्याविभाज्यत्वमिति मन्यन्ते । मिताक्षरादिधृतवचनान्तरविरोधं विकल्पन्यायेन परिहर्तुं यतन्ते । तन्मतानुसार्येव साम्प्रतिको M. R. Jaykar महाशयप्रवर्तितो 'विद्याधन'नियमोऽधिकरणेषु स्थापितः [ Hindu Gains of Learning Act, 1930 ] । तदिह विषयेऽस्माभिरन्यत्र विवेचयिष्यते ।

पृ. २३० पं. १४–

अतश्च पितृद्रव्याविरोधेन यन्मैत्रमर्जितम्, पितृद्रव्याविरोधेन

यदौद्वाहिकम्, पितृद्रव्याविरोधेन यत्क्रमायातमुद्धृतम्, पितृद्रव्याविरोधेन विद्यया यल्लब्धमिति प्रत्येकमभिसम्बध्यते' [मि.] । 'मैत्रादिग्रहणं प्रदर्शनार्थम् । एवमादिषु प्रायेणानुपघातसम्भवादि'ति दा. भा. ।

पृ. २३१ पं. १८–

मैत्रादिलब्धधनस्य वृद्धव्यवहारसिद्धमविभाज्यत्वमनुवदतीत्यर्थः' [सु.] ।

पृ. २३१ पं. १८ ।

"अथवा 'समवेतैस्तु यत्प्राप्तं सर्वे तत्र समांशिनः' इति प्राप्तस्यापवाद इति सन्तुष्यतु भवान् । अतश्च 'यत्किञ्चित्पितरि प्रेते' इत्यस्मिन्वचने ज्येष्ठादिपदाविवक्षया प्राप्तिरिति व्यामोहमात्रम् । अतो मैत्रादिवचनैः पितुः प्रागूर्ध्वं वाऽविभाज्यत्वेनोक्तस्य 'यत्किञ्चित्पितरि प्रेते' इत्यस्यापवाद इति व्याख्येयम् ।" [मि०] ।

पृ. २३१ पं. १६–

तथाहि—दशमाष्टमद्वितीयाधिकरणे दर्शपूर्णमासयोराज्यभागौ प्रकृत्याम्नातं—न तौ पशौ करोति; न सोमे इति । तत्र किं 'न सोमे' इत्यत्र प्रतिषेध आहोस्वित्पर्युदास इत्याशङ्क्य अत्र नकारस्यासमस्तत्वात्क्रिययान्वयात् प्रतिषेध एवेति, अथवा सोमभिन्ने कर्मणि तदनुष्ठानरूपपर्युदास इति पूर्वपक्षद्वयमभ्युपेत्य तन्निरासाय उपदेशातिदेशाभ्यामाज्यभागप्रसक्तेरेवाभावात्पर्युदासासम्भवः । किन्तु न तौ पशौ करोतीत्यस्यैव शेषत्वाद्यथा सोमे नाज्यभागौ एवं

पशावपि नेति दृष्टान्तव्याजेनाऽर्थवादत्वमेव सिद्धान्तितम्।

पृ. ३३६ पं. ५–

'अत्राद्यशब्देन रिक्थक्रयसंविभागपरिग्रहाधिगमप्राप्तम्' मि. 'स्त्रीधनशब्दश्चायं यौगिको न पारिभाषिकः' मि.।

पृ. २३६–पं. १९–

'स्त्रीधनस्य षड्विधत्वं तन्न्यूनसङ्ख्याव्यवच्छेदार्थं नाधिकसङ्ख्याव्यवच्छेदाय' मि.।

'विष्णुना तु षड्विधाधिकमुक्तम्–"पितृभ्रातृसुतभ्रातृदत्तमध्यग्न्युपागतम्। आधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकमिति स्त्रीधन"मिति [स्मृ. चं.]'।

पृ. २३७ पं. ५–

अन्वाधेयस्वरूपं च कात्यायनेनोक्तम्—

'विवाहात्परतो यत्तु लब्धं भर्तृकुलात्स्त्रिया।
अन्वाधेयं तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा' व्य.म.॥

पृ. २३७ पं. ९–

'इदं च द्विसहस्रावधिकं दानं प्रतिवर्षम्। अनेकवर्षेष्वितोऽधिकमपि शक्तौ स्थावरमपि च देयम्' व्य. म.।

पृ- २३७ पं. १७–

मिताक्षराकृता सकलमेव स्त्रीधनसामान्यं दुहित्रा ग्राह्यमित्युक्तम्। परन्तु मयूखकृता पारिभाषिकापारिभाषिकभेदेन स्त्रीधनं द्वेधा विभज्य [अध्यग्न्यादिकं पारिभाषिकम्। रिक्थादिकमपारिभाषिकम्]

पारिभाषिकातिरिक्तं स्त्रीधनं दुहितृसत्त्वेऽपि पुत्रादय एव गृह्णीयुरित्युक्तम् । एवं जीमूतवाहनोऽपि—"तदेव च स्त्रीधनं यद्भर्तृतः स्वातन्त्र्येण दानविक्रयभोगान्कर्तुमधिकरोती"ति स्त्रीधनं व्यवाच्छिनत् । एवं दायतत्त्वमपि ।

पृ. २३८ पं. १६—

'गत्यन्तराभावेनेति शेषः । सति सम्भवे प्रतिदानस्यात्रावश्यकत्वात् [ स्मृ. च. ] ।'

पृ. २४१ पं. ३—

अत्र प्रकरणेऽस्य भागानुक्तावपि अस्य क्षेत्रजत्वेन द्व्यामुष्यायणादत्तकतुल्यत्वेन च सति दातृप्रतिग्रहीत्रोरौरसे प्रतिग्रहीतृचतुर्थांशभागित्वमसति तु उभयोः औरसे उभयपिण्डदत्वं सर्वांशहरत्वं च बोध्यम् । प्रतिग्रहीतुरौरसे सति प्रतिकूलत्वनिर्गुणत्वोभयविशिष्टोऽयं षष्ठांशभाक् । अन्यतरविशिष्टस्तु पञ्चमांशभाक् । क्षेत्रजत्वाविशेषात् । यथाह मनुः—

षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् ।
औरसो विभजन्दायं पित्र्यं पञ्चममेव वा ॥ इति ।

पृ. २४६ पं. ७

'औरसादपकृष्ट' इति मिताक्षरायां पाठः ।

अपकृष्टः औरससम इति बालम्भट्टः ॥

पृ. २४६ पं. १३—

एवञ्च उपरितनमनुवचनपठितः क्रमः, तथा—

औरसः पुत्रिकाबीजक्षेत्रजौ पुत्रिकासुतः ।
पौनर्भवश्च कानीनः सहोढो गूढसम्भवः ॥
दत्तः क्रीतः स्वयन्दत्तः कृत्रिमश्चापविद्धकः ।
यत्र क्व चोत्पादितश्च स्वपुत्रा दश पञ्च च ॥"

इत्यादि स्मृत्यन्तरप्रतिपादितश्च क्रमोऽविवक्षणीय एवेति सम्प्रदायः । यद्वा 'वासिष्ठादिषु वर्गद्वयेऽपि क्वचिद्व्यत्ययेन पाठो गुणवदगुणवद्विषयो वेदितव्यः । गौतमीये तु पौत्रिकेयस्य दशमत्वेन पाठो विजातीयविषयः' मि. । विस्तरेण प्रतिपादितश्चैतद् बालम्भट्टीये ।

पृ. २४९ पं. ११–

'अत्र च शूद्रग्रहणाद्द्विजातिना दास्यामुत्पन्नः पितुरिच्छयाऽप्यंशं न लभते, नाप्यर्धं, दूरत एव कृत्स्न'मिति मि. पाठः ।

पृ. २४९ पं. २०–

'अत्र पुत्रग्रहणं पौत्रप्रपौत्रयोरप्युपलक्षणम्' बालम्भट्टीये । एवमेव दायभाग–दायक्रमसङ्ग्रहादिष्वपि ।

पृ. २५१ पं. २३–

एके=मिताक्षराकारा इति भावः । मयूख–जीमूतवाहनादिसम्मतमाह—अन्ये इति ।

पृ. २५२ पं. १३—

'अनन्तरः सपिण्डाद्य' इति ।

अत्र एकशरीरावयवान्वयालम्बनं Propinquity of blood

सापिण्ड्यमिति विज्ञानेश्वरः ।

तेन मृतस्य पुत्रादयोऽधस्तात् Descendant-षट् सपिण्डाः । एवमुपरिष्टात् पित्रादयः Ascendants षट् । पित्रादीनामुपरिगतानां षण्णां प्रत्येकं पुत्रादयः Collateral line षट् । एव पत्नी, मात्राद्यूर्द्ध्वगताः षट् स्त्रियश्चैते सपिण्डा भवन्ति । एतदितरेषां तत्तत्सप्तमादारभ्य त्रयोदशान्तानां समानोदकता । एते सपिण्डाः समानोदकाश्च गोत्रजा इत्युक्ताः । ततो बन्धवः ।

मयूखकृता तु सपिण्डेष्वेव सगोत्रसपिण्ड ( Agnates )-भिन्नगोत्रसपिण्डे ( Cognates )ति द्विधा विभेदमाश्रित्य सोदरभ्रातृपुत्राभावे पितामही-भगिनी-पितामह-सापत्नभ्रात्रादयः समानोदकान्ताः यथाक्रमं दायभाजो निर्दिष्टाः । ततो भिन्नगोत्रसपिण्डाः बन्धव इत्युक्तम् ।

जीमूतवाहनस्तु नैकशरीरावयवमात्रनिबन्धनं सापिण्ड्यं दायक्रमनियामकमपि तु पिण्डक्रियानिमित्तकं [Religious efficacy] हि तत् । प्रत्यासत्तिस्तु पिण्डदानाधिक्यनिबन्धना ।

अतएव मातुः पूर्वं पितुरधिकारः । स हि पुत्राय पिण्डद्वयं दातुमर्हति इति ।

पृ. २५२ पं. १६—

'एवं भ्राता तत्पुत्रस्तत्पौत्र इति पितृसन्ततौ त्रयः प्रत्यासन्नाः सपिण्डा' इत्यपरार्कः । युक्तं चैतत् मिताक्षरास्थ—सन्तानपदस्वारस्यादिति । तथैव चाद्यत्वे मुख्याधिकरणेषु निर्णयः ।

( Buddha Singh V. Laltu Singh' case 1915 )

एवमग्रेऽपि 'पितामहसन्तानाभावे' इत्यत्र बोध्यम् ।

पृ. २५५ पं. २३—

तत्स्त्रीणामिति बालम्भट्टोविधृतः पाठः ।

पृ. २५७ पं. १८—

'विभक्तं धनं पुनर्मिश्रीकृतं संसृष्टं, तदस्यास्तीति संसृष्टी । संसृष्टत्वं च न येन केनापि, किन्तु पित्रा भ्रात्रा पितृव्येण वा' मि. ।

'विभागकर्तृसामानाधिकरण्येनैव सेति युक्तम् । पित्रादिपदानि तु विभागकर्तृमात्रोपलक्षकाणि' व्य. म. ।

पृ. २६० पं. १२—

यद्वेति—

'यच्च सान्वयमपि कृत्वा न ममेदं कृतमिति भयान्निह्नुते तदपि स्तेयम्' मि. ।

पृ. २६१ पं. १६—

अनृतेनाभिशप्यमानस्य मासिककृच्छ्रयदिव्रताचरणरूपं प्रायश्चित्तमपि धर्मशास्त्रेषु दृश्यते तदपि कर्तव्यम् ।

पृ. २६२ पं. १३—

एतच्च त्रैवर्णिकविषयम् । तथाच मनुः—

प्रायश्चित्तं तु कुर्वाणाः पूर्वे वर्णा यथोदितम् ।

नाङ्क्या राज्ञा ललाटे स्युः दाप्यास्तूत्तमसाहसम् ॥

[मनु. ९।२४०] इति ।

पृ. २६७ पं. ३

'राजदण्डं जनाक्रोशं वोल्लङ्घ्य राजपुरुषेतरजनसमक्षं यत्किञ्चिन्मारणपरदारप्रहर्षणादिकं क्रियते तत्सर्वं साहसमिति । अतः साधारणधनपरधनयोर्हरणस्यापि बलावष्टम्भेन क्रियमाणत्वात्साहसत्वमिति' मि. ।

पृ. २७१ पं. १०–

'परगात्रेषु=स्थावरजङ्गमात्मकद्रव्येषु' [मि.] ।

,, पं. १४ 'दण्डयतेऽनेनेति दण्डो देहः' [मि.] ।

,, पं. १५ 'विरुद्धाचरण'मिति [मि.] ।

,, पृ. २७२ पं. २

साहसानीति । 'सहसा कृतानि दण्डपारुष्याणीत्यर्थः' मि.।

पृ, २७२ पं. ४–"तथा वाग्दण्डपारुष्ययोरुभयोरपि द्वयोः प्रवृत्तकलहयोर्मध्ये यः क्षमते तस्य न केवलं दण्डाभावः किन्तु स पूज्य एव । तथा पूर्वं कलहे प्रवृत्तस्य दण्डगुरुत्वम् । कलहे च बद्धवैरानुसन्धातुरेव दण्डभाक्त्वम् । तयोर्द्वयोरपराधविशेषापरिज्ञाने दण्डः समः । तथा श्वपचादिभिरार्याणामपराधे कृते सज्जना एव दण्डदापनेऽधिकारिणस्तेषामशक्यत्वे तान्राजा घातयेदेव नार्थं हीयादित्येवं पञ्च प्रकारा विषयस्तेनैवोक्ताः ।" मि. ।

पृ. २७५ पं. ८—"तत्र कलहप्रियाः खलु गौडा इति देशाक्रोशः । नितान्तं लोलुपाः खलु विप्रा इति जात्याक्रोशः । क्रूरचरिता ननु वैश्वामित्रा इति कुलाक्षेपः । आदिग्रहणात्सविद्याशि-

त्पादिनिन्दया विद्वच्छिल्पादिपरुषात्क्षेपो गृह्यते ।" [मि.] । न्यङ्गेति मि. पाठः । न्यङ्गमवद्यम् ।

पृ. २८० पं. ११-

नारदीये तु माप्यमाणसाध्ययोः पदयोर्मूलत्वाविशेषादेकत्व-मभ्युपेत्याष्टादशत्वोपपत्तये ऋणादानाद्यतिरिक्तं प्रकीर्णकं नाम पद-मभिहितम् । तत्र ऋणादानादे राज्ञा स्वयमुत्थापननिषेधादर्थिनिवेद-नपुरस्सरत्वादस्य च स्वत एवोत्थापनीयत्वाद्विशेषः ।

तथाच--

प्रकीर्णके पुनर्ज्ञेयो व्यवहारो नृपाश्रयः ।
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ॥
पुरप्रदानं सम्भेदः प्रकृतीनां तथैव च ।
पाषण्डनैगमश्रेणीगणधर्मविपर्ययः ॥
पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ।
प्रतिग्रहविलोपश्च कोप आश्रमिणामपि ॥
वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा ।
न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णकम् ॥

शुक्रनीत्यां-'द्वाविंशतिपदान्याहुर्नृप ज्ञेयानि पण्डिताः' इत्युक्तम् ।

इत्यलम् ।

---

# व्यवहारसारे समुपलब्धानि ग्रन्थ-तत्कर्तृनामानि ।

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, (किरणावलीभास्कर) [वैशेषिक], a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs 1-12

No 2—The Advaita Chintāmaṇi, (अद्वैतचिन्तामणि) [वेदान्त], by Rangoji Bhaṭṭa,
Ed. with Introduction etc by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs 1-12

No 3—The Vedānta Kalpalatikā, (वेदान्तकल्पलतिका) [वेदान्त], by Madhusūdana Sarasvatī
Edited with Introduction etc by Rāmājña Pāṇḍeya Vyākaraṇāchārya Rs 1-12

No. 4—The Kusumāñjali Bodhanī, (कुसुमाञ्जलिबोधिनी) [न्याय], a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja
Ed. with Introduction etc. by Gopinath Kaviraj, MA, Rs 2-0

No. 5—The Rasasāra (रससार) [वैशेषिक], a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīnd
Ed. with Introduction etc. by Gopīnath Kaviraj, MA. Rs. 1-2

No. 6—(Part I)-The Bhāvanā Viveka (भावनाविवेक) [मीमांसा], by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-The Yoginīhṛdaya dīpikā, (योगिनीहृदयदीपिका) [तन्त्र], by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī (काव्यडाकिनी) [काव्यशास्त्र], by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10

No. 9—(Part I)-The Bhakti Chandrikā (भक्तिचन्द्रिका) [भक्ति], a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, (सिद्धान्तरत्न) [गौडीयवैष्णवदर्शन], by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopi nath Kaviraj, M.A. Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, (श्रीविद्यारत्नसूत्र) [ तन्त्र ], by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste, Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, (रसप्रदीप) [अलङ्कार], by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, (सिद्धसिद्धान्तसंग्रह) [नाथमार्ग] by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, ( त्रिवेणिका ) [अलङ्कार], by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya, ( Jñāna Khaṇḍa) (त्रिपुरारहस्य, ज्ञानखण्ड) [तान्त्रिकदर्शन],
Ed. with a Prefatory Note by Gopinātha Kavirj, M.A Rs. 0-14

No. 15-( Part-II )—Do. Do Rs. 2-4

No. 15-( Part III )—Do. Do. Rs. 2-0

No. 15-( Part IV )—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16–The Kāvya Vilāsa, (काव्यविलास) [अलङ्कार], by Chiranjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1–2

No. 17–The Nyāya Kalikā, (न्यायकलिका) [न्याय] by Bhaṭṭ Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A. D. Litt. Rs 0–14

No. 18–(Part I)–The Gorakṣa Siddhānta Saṅgraha, (गोरक्षसिद्धान्त-संग्रह) [नाथमार्ग],
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A., Rs. 0–14

No. 19–( Part. I )–The Prākṛita Prakāśa (प्राकृतप्रकाश) [प्राकृतव्याकरण] by Vararuchi with the Prākṛita Sanjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2–4

No. 19–( Part.II ) Ditto Ditto Rs. 2–12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka (मांसतत्त्वविवेक) [धर्मशास्त्र], by Viśvanātha Nyāyapanchānana Bhaṭṭāchārya.
Edited with Introduction etc. by Pandit Jagannātha Sāstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A.,Principal, Government Sanskrit College, Benares. Rs. 0–12

No. 21–( Part I ) The Nyāya Siddhānta Mālā (न्यायसिद्धान्तमाला) [न्याय], by Jayarāma Nyāya Panchānana Bhaṭṭāchārya.
Edited with Introduction etc. by Dr. Mangal Deva Sāstrī, M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1–4

No. 21–( Part–II ) Ditto Ditto Rs. 2–0

No. 22–The Dharmānubandhi Slokachaturdaśī (धर्मानुबन्धिश्लोक-चतुर्दशी) [धर्मशास्त्र], by S'ri Seṣa Kṛṣṇa with a Commentary by Rāma Pandit.

Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1-0

No. 23-The Navarātrapradīpa (नवरात्रप्रदीप) [धर्मशास्त्र], by Nanda Pandit Dharmādhikārī.

Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by Pândit Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares. Rs. 2-0

No. 24-The S'rī Rāmatāpinīyopaniṣad (रामतापिनीयोपनिषद्) [उपनिषद्], with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.

Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Āchārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 3-12

No. 25-The Sāpiṇḍyakalpalatikā ( सापिण्ड्यकल्पलतिका ) [ धर्मशास्त्र ], by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.

Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4.

No. 26-The Mṛgāṅkalekhā Nāṭikā ( मृगाङ्कलेखानाटिका ) [नाटिका], by Viśvanātha Deva Kavi.

Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityācharya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27-The Vidvachcharita Pañchakam ( विद्वच्चरितपञ्चकम् ) [निबन्ध] By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Sarasvati Bhavana Library, Benares. With an Introduction by Gopināth Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs. 2-0.

No. 28-The Vrata Kos'a (व्रतकोश) [धर्मशास्त्र], by Jagannātha S'āstri Hosinga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares With a Foreword by S'rī Gopināth Kaviraja, M. A., Principal, Govt Sanskrit College, Benares. Rs. 4-0

No. 29-The Vritti dīpikā (वृत्तिदीपिका) [व्याकरण], By Mauni S'rī Kṛṣṇ Bhatta.
Edited with Introduction etc by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30-The Padārtha Maṇḍanam ( पदार्थमण्डन ) [ वैशेषिक ], By S'rī Veṇīdatta.
Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0-14

No. 31-( Part I)-The Tantraratna ( तन्त्ररत्न ) [ मीमांसा ], by Pârth Sārathi Mis'ra.
Edited by M. M. Dr. Ganganatha Jha, M. A, D. Litt, Vice-Chancellor, Allahabad University Allahabad Rs. 1-14

No. 31-( Part II ) Ditto. Ditto.
Edited by Pt. Gopāl S'āstri Nene, Govt. Sanskrit College, Benares. Rs. 2-4

No. 32-The Tattvasāra ( तत्त्वसार ) [ न्याय ], by Rākhāldasa Nyāyaratna.
Edited with Introduction etc by. Harihara S'astri, Benares Hindu University. Rs. 1-0.

No. 33-( Part I ) The Nyaya Kaustubha ( न्यायकौस्तुभ ) [ न्याय ], by Mahadeva Puntamkar.
Edited with Introduction etc by Umes'a Miśra, M. A. Allahabad University, Allahabad. Rs. 3-4

No. 34-( Part I ) The Advaita Vidyātilakam ( अद्वैतविद्यातिलकम् ) [ शाङ्करवेदान्त ], by S'rī Samarapuṅgava Dīkṣita.
With a Commentary by S'rī Dharmayya Dīkṣita.
Edited with Introduction, etc, by Ganapati Lal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares. Rs. 1-4

No. 35-The Dharma Vijaya Nāṭaka ( धर्मविजयनाटक ) [ नाटक ], by Bhūdeva S'ukla.

Edited with Introduction etc, by Pandit Nārāyaṇa S'āstri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares. Rs. 1-4

No. 36–The Ānanda Kanda Champū ( आनन्दकन्दचम्पू ) [ चम्पू ], by Mitra Miśra.
Edited, with a Foreword by Gopinath Kaviraj, M. A, by Nanda Kishore Sāhityācharya, Research Scholar, Sanskrit College, Benares. Rs. 3-8

No. 37–The Upanidāna Sūtra ( उपनिदानसूत्रम् ) [ वेद ],
Edited with Introduction by Dr. Mangaldeva S'āstri, M. A., D. Phil. Rs. 1-0

No. 38–The Kiranāvali prakās'a dīdhiti ( Guṇa ), ( किरणावली-प्रकाशदीधिति ) [ वैशेषिक ], by Raghunāth S'iromani.
Edited by Pandit Badrināth Sāstri, M. A., Lucknow University Rs. 1-12

No. 39–The Rāma Vijaya Mahākāvya, ( रामविजयमहाकाव्य ) [ काव्य ] by Rupanātha.
Edited by Pt. Ganapatilal Jha, M. A. Rs. 2-0

No. 40–(Part I ) The Kālatattva Vivechana (कालतत्त्वविवेचन) [धर्मशास्त्र] by Raghunātha Bhaṭṭa.
Edited with a Foreword by Gopinātha Kaviraja M.A by Nanda Kishore S'arma Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 4-0

No. 40–( Part II ) Do Do Rs. 3-8

No. 41–( Part I ) The Siddhānta Sārvabhauma (सिद्धान्तसार्वभौम) [ज्योतिष], by S'rī Munīśvar .
Edited with Introduction etc. by Jyautiṣāchārya Pandit Murlidhara Thakkura, late Sadholal Scholar, Sanskrit College, Benares Rs 3-0

No. 41–( Part II ) Do. Do.

No. 42–The Bheda Siddhi (भेदसिद्धि) [न्याय], by Vis'vanātha Pañchānana Bhaṭṭāchārya.
Edited with notes etc., by Nyāya Vyākaranāchārya Pandit Sûrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares. Rs. 1-12

No. 43-( Part I ) The Smārtollāsa ( स्मार्तोल्लास ) [ कर्मकाण्ड ],
by S'iva Prasāda.
Edited with Introduction, notes, etc, by Vedāchārya Pandit Bhagavat Prasad Miśra, Professor, Govt. Sanskrit College, Benares. Rs. 1-8

No. 43-( Part II ) Do. Do.

No. 44-( Part I ) S'ūdrāchāra S'iromaṇi (शूद्राचारशिरोमणि) [धर्मशास्त्र]
Edited by Sāhityāchārya Pandit Nārayan S'astri Khiste. Rs, 2-4

No. 45-( Part I ) Kiranāvalī Prakāśa (Guṇa) (किरणावली प्रकाश-गुण)
[ वैशेषिक ], by Vardhamāna.
Edited, with a Foreword by Pt. Gopinath Kaviraj M., A., by Pandit Badrinath S'astri, M. A., Lucknow University. Rs. 1-8

No. 46-( Part I ) Kāvya prakāśa dīpikā (काव्यप्रकाशदीपिका) [अलङ्कार]
by S'rī Chaṇḍī Dāsa.
Edited by S'ivaprasāda Bhaṭṭāchārya, M. A., Professor, Presidency College, Calcutta. Rs. 1-12

No. 47-Bhedajayaśrī ( भेदजयश्री ) [ माध्ववेदान्त ], by S'rī Tarkavāgīśa Bhaṭṭa Venīdattāchārya,
Edited with Introduction etc, by Pandit Tribhuvan prasad Upādhyāya, M. A., Inspector of Sanskrit Pāṭhashalas, United Provinces, Benares. Rs. 1-4

No. 48-Samyak Sambuddha bhāṣitam Buddhapratimālakṣaṇam
( सम्यक्संबुद्धभाषितं प्रतिमालक्षणम् ) [ शिल्पशास्त्र ],
With the Commentary Sambuddhabhāṣita-pratimā lakṣaṇa Vivaraṇī. Critically edited with Introduction etc by Haridās Mitra, M, A, Viśvabhārati, S'āntiniketana. Rs. 1-4

No. 49-Bhedaratna ( भेदरत्न ) [ न्याय ] by Sankara Miśra,
Edited with Introduction etc, by Pandit Sūryanārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares. Rs. 1-8

No. 50-Mātrikā Chakra Viveka ( मातृकाचक्रविवेक ) [ तन्त्र ], by Svatantrānanda Nātha, with a Commentary.
Edited by Pandit Lalita Prasad Dabral Vyākarnāchārya,

With a Foreword by Pt Gopināth Kaviraj, M A., Principal Govt. Sanskrit College, Benares.

No. 51-52, Advaita Siddhānta Vidyotana (अद्वैतसिद्धान्तविद्योतन) [वेदान्त] by Brahmānanda Sarasvati

and

Nṛisimha Vijnāpana (नृसिंहविज्ञापन) [वेदान्त], by Nṛisimhāśrama. Edited with notes, Introduction etc. by Pandit Sūrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares,

No. 53-Nṛisimha Prasāda-Vyavaharsāra (नृसिंहप्रसाद-व्यवहारसार) [धर्मशास्त्र], by Dalapati Rāja.

Edited with Introduction etc. by Pandit Vināyaka S'āstri Tillu, Research Scholar, Sanskrit College, Benares.

No. 54-Nṛisimha Prasāda-Prāyaśchitta Sāra (नृसिंहप्रसाद प्रायश्चित्तसार) [धर्मशास्त्र], by Sri Dalapati Rāja.

Edited by Pandit Nanda Kishore Sharma and Nanda Kumar Sharma Sahityacharya.

No. 55-Nṛisimha Prasâda-S'rādha Sāra (नृसिंहप्रसाद श्राद्धसार) [धर्मशास्त्र].

Edited by Pandit Vidyadhara Miśra, College of Oriental Leraning, Benares Hindu University, Benares.

No. 56-Bhagavannāma Mahātmya Samgraha (भगवन्नाममाहात्म्यसंग्रह) [भक्तिशास्त्र], by Raghunathendra yati, with Com. by Ananta S'āstri Phadke.

Edited by Pt. Ananta S'āstri Phadke.

## Works in the press

No. 1. Dakṣiṇāmūrti Samhitā (दक्षिणामूर्तिसंहिता) [तन्त्र],

Edited by Pt. Nārāyna S'āstri Khiste.

No. 2. Ās'valāyana S'rauta Sūtra with Sidhhānti Bhāshya (सिद्धान्तिभाष्यसहित आश्वलायनश्रौतसूत्र) [वेद],

Edited by Dr. M. D. S'āstri, M. A., D. Phil.

No. 3. Nīti manjarī (नीतिमञ्जरी) [वेद], by Dyā Dvivedī.

Edited by Dr. Mangal deva Sastri. M. A., D. Phil.

No. 4. Nyāya Kaustubha ( Part II ) Anumānakhaṇḍ (न्यायकौस्तुभ-अनुमानखण्ड) [न्याय], by Mahādeva Puntamkar.
Edited by Pt. Goswami Dāmodara S'āstri.

No. 5. Mīmānsā Chandrikā ( मीमांसाचन्द्रिका ) [ मीमांसा ], by Brahmānanda Sarsvati.
Edited by Pt, Haran Chandra Bhaṭṭāchārya S'āstri.

No. 6. Gaṇita Kaumudī (गणित कौमुदी) [गणित], by Nārāyana Pandit
Edited by Pt. Padmakar Dvivedi.

No. 7. Kiranāvali prakāśa, ( Part II) ( किरणावली प्रकाश ) [वैशेषिक], by Vardhamāna Upādhyāya.
Edited by Pt. Badrināth S'āstri, M. A.

No. 8. Tantraratna (Part III) (तन्त्ररत्न) [ मीमांसा ], by Partha Sārathi.
Edited by Pt. Gopal Sāstri Nene,

No. 9. S'ūdrāchāra S'iromaṇi (Part II) (शूद्राचारशिरोमणि) [धर्मशास्त्र]. by S'eṣa Kṛṣṇa.
Edited by Pt. Nārāyana S'āstri Khiste.

No. 10. Kāvya prakāśa dīpikā ( Part II ) ( काव्यप्रकाशदीपिका ) [ अलङ्कार ], by S'ri Chaṇḍīdāsa.
Edited by Pt S'ivaprasāda Bhaṭṭāchārya, M. A.

No. 11. Smārtollasa ( Part III ) ( स्मार्तोल्लास ) [ कर्मकाण्ड ], by Siva prasada. Edited by P. Bhagavata prasād Miśra.

No. 12. Kālatattvavivechana ( Part III ) (कालतत्त्वविवेचन) [धर्मशास्त्र], by Ragunātha Bhaṭṭa.
Edited by Pt. Nanda kishore Sharma.

No. 13. Siddhānta Sārvabhauma ( Part-III ) ( सिद्धान्तसार्वभौम ) [ ज्यौतिष ], by Munīśvara.
Edited by Pt. Murlidhar Thakkur.

## Works in the press.

No. 14. Upendra Vijnāna Sūtra ( उपेन्द्रविज्ञानसूत्र ) [ दर्शन ],

Edited by Dr. M. D. Shastri.

No. 15. Nyāyāmṛita Saurabha ( न्यायामृतसौरभ ) [ माध्ववेदान्त ], by Vanamāli.

Edited by Pt. Nrisimha Achārya.

No. 16. Vâsisṭha Darśana (वाशिष्ठदर्शन) [वेदान्त],

Edited by Dr. B. L. Atreya M.A., Ph. D. Professor, Benares, Hindu University, Benares.

---

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its Evolution, by Gaṅgānātha Jhā.
(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.
(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.
(b) index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.
(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha.
(d) A New Bhakti Sūtra, by Gopinath Kaviraj.
(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.
(f) Theism in Ancient India, by Gopinath Kaviraj.
(g) Hindu Poetics, by Batuka nātha S'armā.
(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.
(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj.
(j) Nyāya Kusumāñjali (English Translation), by Gopinath Kaviraj.
(k) The Definition of Poetry, by Nārāyaṇa S'āstri Khiste.
(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the Late Col. G. A. Jacob.
(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgā-nātha Jha.
(c) Theism in Ancient India, by Gopintha Kaviraj.
(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.
(e) Naiṣadha and S'rī-Harṣa by Nīlakamal Bhaṭṭāchārya.
(f) Indian Dramaturgy, by P. N. Pātankar. Rs 5.

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā-nātha Jha.
(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.
(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.
(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedī.
(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy
(f) Satakāyavāda: Causality in Sāṅkhya, by Gopinatha Kaviraj.
(g) Discipline by Consequences, by G. L. Sinha.
(h) History of the origin and expension of the Aryans, by A. C. Ganguly.
(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5.

Vol. V—

(a) Ancient Home of the Aryans and their migration to India by A. C. Ganguly.
(b) A Satrap Coin, by Shyamalal Mehr.
(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.
(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Tat-tirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āsti.
(e) Foramal Training and the Ancient Indian Thought, by G.L. Sinha.
(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.
(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.
(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.
(b) Some Aspects of the History and Doctrines of the Nāthās, by Gopinath Kaviraj.
(c) An Index etc. the Ramayana, by Manmatha nātha Roy.
(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.
(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinātha Kavirāj.
(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhāmaha and his Kāvyālaṅkār, by Baṭukanātha S'armā and Baladeva Upādhyāya.

(b) Some variants in the readings of the Vais'eṣika Sūtras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayaṇa, by Manmatha Nātha Roy.

(g) An Index to S'abrar's Bhāṣya, by the late Col. J. A. Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Srarswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the word Parārdha, by Umes'a Mis'ra. Rs. 5

Vol. VIII.

(a) Indian Philosophy, by Tarakanatha Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to S abara's Bhāṣya, by the late Col. J. A. Jacob.

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svami the commentator of the Rigveda, by Mangaladeva S'âstri.

(e) Mysticism in Veda, by Gopināth Kaviraj.

(f) The Dova dāsī: a brief history of the Institution, by Manmatb Nātha Roy. Rs. 5

Vol. IX (In progress)

(a) The Life of a Yogin, by Gopinātha Kavirāj.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

( SANSKRIT )

## SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M. A

Kirana 1 ( In progress )

(a) Mangalam, etc, by Nārāyana S'āstri Khiste.

(b) Mimansaka mata samgraha, by Haranchandra Bhaṭṭācharya

(c) S'rimad Ācharya Mandana Mis'ra by Chinna Swami S'astri,

(d) Bhagavato Buddhasya Chaitama Upades'as'cha, by Gopinatha Kaviraj

Kirana I ( Supplement )

Sanskrita Kavi Parichaya–(Bharavi) by Nanda Kishore Sharma

Kirana II ( In progress )

(a) S'āradā Prasādanam by Nārâyāna S'āstri Khiste,

(b) Chūdāmaṇi Dars'anam by S'as'adhara Tarkachūdāmaṇi.




To be had of

The Superintendent

Government Press, U. P.,

Allahabad.